Garbhādhāna section of his *ChMbh*, Halāyudha (p. 185) states that the Mantra has been omitted by s o m e (*kaiścin nādriyate*). It is not improbable that he refers thereby to Guṇ.

While discussing the various readings of some of the Mantras Vidyāvācaspati has referred to the directions given by Aniruddha Bhaṭṭa for the applications of those Mantras, and also to the comments made by Guṇ on them. The nature of these references[1] suggests that the *Pitṛdayitā* of Aniruddha and the *ChMbh* of Guṇ were written on a common plan, the former being concerned with the ritualistic application of the Mantras and the latter with the interpretation of their meanings. Aniruddha was the *guru* of king Ballālasena[2] and Guṇ adorned the court of that king as also that of his son Lakṣmaṇasena.[3] Hence, Guṇ must have been a junior contemporary of Aniruddha. Thus younger than Aniruddha and older than

Guṇ and Aniruddha were contemporaneous.

1 *Dhārmikakarmarahasya* (S. S. Parishad Ms.), fol. 59a : *Aniruddha-l i k h i t o Guṇaviṣṇu-d h ṛ t a ḥ* / fol. 59b : *Aniruddha-l i k h i t a ṃ Guṇaviṣṇunā v y ā k h y ā t a m* / Ibid.: *tena l i k h i t a ṃ v y ā k h y ā t a ñ ca Guṇaviṣṇunā* /

2 See the Introduction to the *Pitṛdayitā*, Sanskrit Sahitya Parishad Series.

3 See *ante*, p. xxiii.

Halāyudha, Guṇ appears to have flourished in the 12th century A.C.

### (c) *His Works*

Besides the present work, Guṇ wrote a commentary on the *Mantrabrāhmaṇa* of the Sāmaveda. As already stated, a ms. copy of this commentary is deposited in the Central Library, Baroda, and has been described under the title *Chāndogyabrāhmaṇabhāṣya* in the *Descriptive Catalogue of Mss. in the Central Library*, vol. I, p. 112. The majority of the Mantras in this work and, of course, the commentaries thereon are identical with those in the *ChMbh*. Guṇ has also written a commentary, we are told by Mahāmahopādhyāya Parameshwar Jha in his Introduction to the Mithilā edition of the *ChMbh*, on the Mantras occurring in the *Pāraskaragṛhyasūtra* of the White Yajurveda. A ms. copy of this work is possessed, we are informed, by a Pandit in Mithilā, and has been examined by the Mahāmahopādhyāya himself.[1] Thus Guṇ was the author of three works of similar nature,

Three works of Guṇ.

1 *Etatkṛtaṃ Pāraskaragṛhyabhāṣyam apy asti| tac ca Candanapurāgrāmavāsino mṛtavaidika-Jayapālaśarmaṇaḥ savidhe 'ntimabhāge katipayapatravikalaṃ mayā vilokitam āsīt.—Chāndogyamantrabhāṣya* (ed. Parameshwar Jha, Darbhanga), p. 174.

all being commentaries on Vedic Mantras applied in the domestic ceremonies.

### (d) *The Nature of his Commentary*

Brevity is a characteristic feature of the present work of Guṇ. But in spite of this terseness almost every word of a Mantra is paraphrased in the commentary. The explanatory remarks couched in a very lucid language, with occasional references to the ritualistic bearings of the mantras, are a speciality of the *ChMbh.* Guṇ has cited in his commentary a large number of passages from various works dealing with a variety of topics.[1] His acquaintance with the *Nighaṇṭu* and the *Nirukta* is evident from several quotations occurring in the *ChMbh.*[2] In the grammatical discussions of the commentary, Guṇ has throughout followed the system of Pāṇini. The etymological discussions, in which Sāyaṇa takes special delight, are however generally absent in Guṇ's commentary. The *ChMbh*, concerned as it is with select Vedic Mantras, cannot, of course, bear comparison with the extensive Vedic commentaries of the great

1 A list of quotations found in the *ChMbh* has been appended hereto.

2 *Nighaṇṭu*, II, 1 : *ChMbh*, 2,17—śacīti karmaṇo nāma ; *Nirukta*, 1, 18 : *ChMbh*, Bhāṣyopakramaṇikā, p. 1 (with some alterations)—sthāṇur ayaṃ bhārahārah kilābhūt.

scholiast Sāyaṇa. A scholar of great erudition, Sāyaṇa has utilised the opportunity by displaying his deep knowledge of every branch of the Vedic literature. He has sometimes given a number of different interpretations of single Vedic Mantras, supplementing them with quotations or etymological discussions. Sāyaṇa's commentary, it must be admitted, presents at times readings and interpretations of the Mantras considered better than Guṇ's, the reason being that Sāyaṇa had the advantage of living in Southern India where the Vedic learning continued to be in a flourishing condition.

---

## POSTSCRIPT

I offer my grateful thanks to Mahāmahopādhyāya Dr. Ganganatha Jha, Vice-Chancellor of the Allahabad University, who has kindly contributed a Foreword to this volume.

D. B.

# LIST OF ABBREVIATIONS

## संक्षिप्तचिह्नज्ञेयानि नामानि

आ = आमलताग्रामात् संगृहीतं छान्दोग्यमन्त्रभाष्यस्य हस्तलिखितमादर्शपुस्तकम् ।

क = कविरत्नप्रकाशितो भाष्यांशः ।

छा = छान्दोग्यब्राह्मणभाष्यम् ।

प = संस्कृतसाहित्यपरिषद्ग्रन्थागारस्थितमादर्शपुस्तकम् ।

ब्रा = तेजश्चन्द्रविद्यानन्दसंशोधितं ब्राह्मणसर्वस्वम् ।

भ = भट्टाचार्य्यप्रदत्तमादर्शपुस्तकम् ।

मै = मैथिलविद्वत्-प्रकाशितं छान्दोग्यमन्त्रभाष्यम् ।

य = यशोदलग्रामात् संगृहीतमादर्शपुस्तकम् ।

सा = रामनाथविद्यावाचस्पतिकृतं सामगमन्त्रव्याख्यानम् ।

Br—Brāhmaṇasarvasva.

ChMbh = Chāndogyamantrabhāṣya.

G = German Edition of the Mantrabrāhmaṇa (Prapāṭhaka I, ed. H. Stönner ; Prapāṭhaka II, ed. H. Jörgensen).

GGṛs = Gobhilagṛhyasūtra.

Gṛs = Gṛhyasūtra.

Guṇ = Guṇaviṣṇu.

JASB = Journal of the Asiatic Society of Bengal.

KhGṛs = Khādiragṛhyasūtra.

Mbr = Mantrabrāhmaṇa.

# प्रास्ताविकं निवेदनम्

छान्दोग्यमन्त्रभाष्यमिदं भट्ट-गुणविष्णुप्रणीतमधिकविंशेभ्यो वर्षेभ्यः प्राग् द्वारवङ्गनगरे मिथिलाग्रन्थमालायां प्रकाशितमभूत्। कलिकातानगरे च संस्कारश्राद्धादिप्रयोगपद्धतीनामन्तर्भावितया तत्र तत्रोपयुक्तानां केषाञ्चन मन्त्राणां गुणविष्णुकृतव्याख्यानान्यनेकधा मुद्रापितानि। परमतिप्राचीनं परमप्रमाणञ्च भाष्यमिदं न कुत्रापि सामग्र्येण यथावत् प्रयत्नपरिशोधितमुपलभ्यत इति संस्कृतसाहित्यपरिषदाऽस्य प्रकाशनभारः स्वीकृतः। कालवशाद् वेदानां पठनपाठनशैथिल्येन लेखकप्रमादात् साहसिकजनानां स्वकपोलकल्पितपाठप्रक्षेपाच्च भाष्यस्यैतस्यादर्शपुस्तकेषु कृतपदान्यशुद्धिशतानि दुःसाधमेवाऽस्य व्यदधुः संशोधनम्।*

---

* न विज्ञायते किंविधानि कियन्ति वा आदर्शपुस्तकान्युपयुक्तानि प्राक्प्रकाशितगुणविष्णुव्याख्यानानां संशोधकैः। तेषु व्याख्यानेषु व्याख्यातमन्त्रेषु च परिलक्षितानामतिमात्रमुद्देजिकानामशुद्धीनां दिशः समाहृत्येह प्रदर्श्यन्ते।

उत्तरविवाहकर्मान्ते अवगततो विनियुक्ते "अन्नं प्राणस्य पड्विंशस्तेन बध्नामि त्वासौ" इति मन्त्रे परिपठितं बन्धनार्थकं "पड्विंश-"पदं श्रीमत्कामाचरणकविरत्नमहोदय-सम्पादितायामस्माभिः 'क' इति संक्षिप्तनाम्ना सङ्केतितायां भवदेवपद्धतौ (प्रथमाङ्कनावृत्तौ ७९ पृ:; द्वितीयाङ्कनावृत्तौ ११२ पृ:) रत्नप्रभायाञ्च (२५१ पृ:) "षड्विंश"त्वेन परिणतम् "पञ्चविंशतत्त्वातिरिक्त" इत्येवंरूपव्याख्यया संयोजितञ्च दृश्यते। श्रीमत्सीतानाथसिद्धान्तवागीश-शरच्चन्द्रकाव्यव्याकरणतीर्थमहोदयाभ्यां सम्पादिते पुरोहितप्रदीपे (१मखण्डे ७४ पृ:) पुनस्तदेव पदं "पङ्क्तिंश"-रूपेण पठितम्। महामहोपाध्याय-श्रीमत्परमेश्वरझामहोदयसंशोधिते अस्माभिः'म' इति संक्षिप्तनाम्ना सङ्केतिते छान्दोग्यमन्त्रभाष्ये तस्यैव पदस्य "पङ्विंश" इति पाठस्वीकृत्या "पचेरच: परो विंश: नुम् छन्दसीति नुमागमः निपातनाद्वर्णान्तः" इति भाष्यग्रन्थो मुद्रापितः। मन्त्रस्यैतस्याकरभूते मन्त्रब्राह्मणे (१, ३, १०) अस्मत्संगृहीतेषु द्विवेष्वादर्शपुस्तकेषु च "पड्विंश" इत्येव पाठः पर्यलक्ष्यत इत्यस्माभिरत्र (१यखण्डे ६१तमे मन्त्रे ४९ पृ:) स एव पाठो गृहीतः।

पिण्डदानकर्मणि विनियुक्ते "अचन्नमीमदन्त" इत्यादिमन्त्रे "स्वभानवो विप्रा नविष्ठया

विभिन्नदेशेभ्यः समाहृतानामादर्शपुस्तकानां साहाय्येन छान्दोग्यब्राह्मणभाष्य-सामगमन्त्रव्याख्यानाद्यप्रकाशितग्रन्थानामालोचनेन हलायुध-सायणाचार्य-कृतयोर्ब्राह्मणसर्वस्व-मन्त्रब्राह्मणभाष्ययोः परिशीलनेन च संहिताब्राह्मणाद्याकरग्रन्थैर्मन्त्रपाठान् संवाद्य यथामति संशोधितमस्माभिर्भाष्यमिदम्। क्वचित् कुत्रचिद् स्थलेषु पुनरादर्शपुस्तकेषु मन्त्राणामाकरसंवादिनः पाठाननुपलभ्य मूले यथोपलब्धा आदर्शधृताः पाठा एव संरक्षिताः, परं तत्र पादटीकायामाकरसङ्केतिकायां वा आकरदृष्टाः पाठा अपि प्रदर्शिता येन कर्मानुष्ठायिनो विद्वांसो यथारुचि तत्तन्मन्त्रपाठानुपादातुं परिहातुं वा प्रभवेयुः। यानि नाम साधनान्येतद्ग्रन्थशोधनार्थमस्माभिरवलम्बितानि सर्वाणि तान्याङ्गलभाषामयभूमिकायां निरवशेषं निरूपितान्येव।

भट्ट-दासुकनूनुर्मन्त्रभाष्यकृद्गुणविष्णुरयं शत्रुघ्नकृत-मन्त्रार्थदीपिकायां नित्यानन्दकृत-षट्कर्मव्याख्यानचिन्तामणौ रघुनन्दनकृत-स्मृतितत्त्वेषु रामनाथविद्यावाचस्पतिकृत-धार्मिककर्मरहस्य-सामगमन्त्रव्याख्यानादिग्रन्थेषु च नामत एवोल्लिखितस्तत्तद्ग्रन्थकृद्भ्यः प्राचीन इति स्फुटमवगम्यते। यद्यप्ययं सायणा-

मतौ योजा न्विन्द्र ते हरी" इति मन्त्रभागस्य पाठाः पुरोहितप्रदीपे (२यखण्डे ऋग्वेदिनां पार्वणश्राद्धप्रयोगे ९३ पृः; २यखण्डे आद्यैकोद्दिष्टप्रकरणे ११२तमपृष्ठे २१शटिप्पण्याम्; २यखण्डे सामगानां पञ्चपार्वणश्राद्धप्रयोगे २०० पृः) "सुभानवो (९३ पृः स्वभानवो) विप्रान् विष्ठया मतौयो यान्निन्द्र (९१ पृः यान्विन्द्र) ते हरी" इत्येवं मुद्रापिताः मे-पुस्तके च "विप्रान् विष्ठया मतो यो जान् विन्द्रते" इत्यवं संशोधिता दृश्यन्ते। अस्माभिरिह (८मखण्डे ३८शमन्त्रे १४१ पृः) आकरसंवादी (ऋ० सं० १, ८२, २) हस्तलिखितादर्शपुस्तकानुसारी पाठः स्वीकृतः। मे-पुस्तके (१७२ पृः) "भाजोऽसि सहोऽसी"त्यादि-मन्त्रव्याख्यायां "महः उत्साहः" इत्यत्र "महः उत्सवः" इत्येवमपपाठो मुद्रापितः। स च लेखकप्रमादजात इति बुद्ध्याऽस्माभिरिह (८म खण्डे ९६तममन्त्रे १५२ पृः) हलायुधकृत-ब्राह्मणसर्वस्वीय-पाठसंवादेन संशोधितः।

एवमन्या अप्यशुद्धयस्तत्र तत्र परिलक्षिता इह भाष्ये पादटीकायां प्रदर्शिताः। मे-पुस्तकेऽनुपलब्धः कश्चन भाष्यांशोऽत्र प्राथम्येन प्रकाशित इति तदपि पादटीकायां यथास्थानमुल्लिखितमेव।

चार्येण हलायुधभट्टेन च कुत्रापि नाम्ना नोदलेखि तथापि सायणीय-मन्त्र-ब्राह्मणभाष्ये हलायुधीय-ब्राह्मणसर्वस्वे चैतदीयवचनानां बहुशः सन्निवेशदर्शनात् सायण-हलायुधाभ्यामेतस्य पूर्ववर्तित्वं विस्पष्टं प्रतीयते। खृष्टीयद्वादश-शतकेऽयं गौड़राजयोर्बल्लालसेन-लक्ष्मणसेनयोः सभामन्दिरमलञ्चकारात्मनोऽव-स्थानेनेति प्रतिपादितमेव एवमस्माभिः प्रमाणोपन्यासपुरःसरमाङ्गलभाषामय-भूमिकायाम् समुल्लिखितञ्चास्यैव ग्रन्थकृतो ग्रन्थान्तरयोश्छान्दोग्यब्राह्मणभाष्य-पारस्करगृह्य[मन्त्र]भाष्ययोर्यथाप्राप्तं नामादिकमित्यलं पिष्टपेषणायासेन।

बहुसाधनसहायेन परमप्रयत्नेन परिशोधितेऽपि ग्रन्थेऽस्मिन् विषयानव-गमाद्वा मतिमान्द्याद्वा मानुष्यकसुलभप्रमादाद्वाऽऽपतितं यत् किञ्चन स्खलितं कृपया सुधीभिः क्षन्तव्यमिति प्रार्थ्यते

१८५२तमशकाब्दे
मार्गशीर्षीय-शुक्लैकादश्याम्
स्कटिश्-चार्च-महाविद्यालयतः

विदुषां वशंवदः
श्रीदुर्गामोहनशर्मा।

छान्दोग्यमन्त्रभाष्यव्याख्यातमन्त्राणामकारादिवर्णानुक्रमेण

## सूचीपत्रम् *



* अत्र आद्योऽङ्कः खण्डसंख्यां द्वितीयश्च मन्त्रसंख्यां सूचयति।

# छान्दोग्यमन्त्रभाष्ये व्याख्यातमन्त्राणां विनियोगानुक्रमणिका

[ इह भाष्ये बहुषु स्थलेषु मन्त्राणां विनियोगा नोपदिष्टा इति ते गृह्यसूत्रादिभ्योऽत्र समाहृताः ]

| विनियोगस्थानम् | मन्त्राङ्काः | पत्राङ्काः |
|---|---|---|
| **कुशण्डिकायाम्** | १म खण्ड (१—१८) | (२—१०) |
| उत्करनिरसनम् | ,, १ | २ |
| अग्निसंस्कारः / अग्निस्थापनम् | ,, २ | २ |
| तृणनिरसनम् | ,, ३ | ३ |
| ब्रह्मोपवेशनम् | ,, ४ | ३ |
| अयज्ञियवाग्वचननिमित्तजपः | ,, ५ | [illegible] |
| भूमिजपः | ,, ६ | ४ |
| परिसमूहनम् | ,, ७—९ | ४, ५ |
| आज्यसंस्कारे पवित्रच्छेदनम् | ,, १० | ७ |
| आज्यसंस्कारे पवित्रमार्जनम् | ,, ११ | ७ |
| आज्यसंस्कारे आज्योत्पवनम् | ,, १२ | ७ |
| अग्निपर्युक्षणे उदकाञ्जलिसेकः | ,, १३—१५ | ८ |
| अग्निपर्युक्षणम् | ,, १६ | ९ |
| प्रपदमन्त्रजपः | ,, १७ | ९ |
| विरूपाक्षजपः | ,, १८ | १० |
| **उदीच्यकर्माणि** | २य खण्ड (१—२९) | (१४—२६) |
| प्रायश्चित्तहोमः | ,, १—[illegible] | १४—१[illegible] |

| विनियोगस्थानम् | मन्त्राङ्काः | पत्राङ्काः |
|---|---|---|
| सन्ध्यायाम् | ५म खण्ड (१—१७) | (८५—९७) |
| मार्जनम् | ,, १, २ | ८५ |
| व्याहृतयः | ,, ३ | ८६ |
| गायत्री | ,, ४ | ८६ |
| गायत्रीशिरः | ,, ५ | ८६ |
| प्रातराचमनम् | ,, ६ | ८८ |
| मध्याह्नाचमनम् | ,, ७ | ९० |
| सायमाचमनम् | ,, ८ | ९१ |
| मार्जनम् | ,, ९—११ | ९१ |
| अघमर्षणम् | ,, १२ मन्त्रत्रयम् | ९३ |
| सूर्योपस्थानम् | ,, १३, १४ | ९४, ९५ |
| सप्रणवव्याहृतिकगायत्री | ,, १५ | ९५ |
| आत्मरक्षा | ,, १६ | ९६ |
| रुद्रोपस्थानम् | ,, १७ | ९७ |
| स्नानप्रकरणे | ६ष्ठ खण्ड (१—३८) | (९७—११३) |
| तीर्थनमस्कारः | ,, १ | ९७ |
| मृद्ग्रहणम् | ,, २—४ | ९८—१०० |
| मृन्मर्दनम् | ,, ५—१० | १०२ |
| सूर्यावेक्षणम् | ,, ११, १२ | १०३, १०४ |
| मृदनुलेपनम् | ,, १३, १४ | १०४ |
| गोमयानुलेपनम् | ,, १५ | १०५ |
| शुष्काघमर्षणम् | ,, १६—१८ | १०५, १०६ |
| मार्जनम् | ,, १९—३५ | १०६—११२ |
| जलप्राणायामः | ,, ३६—३८ | ११३ |

# छान्दोग्यमन्त्रभाष्यम्

## [ भाष्योपक्रमणिका ]

शङ्कराय नमस्तस्मै भक्तानां यत्प्रसादतः ।
सूक्ष्मान्तर्हितदूरस्था भावा भान्ति यथाऽग्रतः ॥
तत्तत्कर्मप्रयोगार्थं पाठस्खलनभीरुणा ।
गुणविष्णुना छान्दोग्यं मन्त्रभाष्यं विधीयते ॥[1]

'स्थाणुरिव*भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
अर्थवित्*सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा' ॥

अतो मन्त्रार्थज्ञाने यतितव्यम् ।

तथा—'योऽह्वरह्वरविदितर्षिच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण वा यजति याजयति वाऽधीतेऽध्यापयति वा होमे कर्मण्यन्तर्जलादौ वा स पापीयान् भवति, यातयामान्यस्य छन्दांसि भवन्ति; अथ यो मन्त्रे मन्त्रे वेद सर्वं स श्रेयान् भवति, अयातयामान्यस्य छन्दांसि भवन्ति ; तस्मादेतानि मन्त्रे मन्त्रे विद्यात्'† इति श्रुतेरृषिच्छन्दोदेवताविनियोगज्ञाने[2] यतितव्यम् । यजूंषि त्वपरिमिता-

---

* 'स्थाणुरयम्' इति 'अर्थज्ञ इत्' इति च यास्कीयनिरुक्त-(१,१८) धृतः संहितोपनिषद्ब्राह्मणीयो (३) मूलपाठः ।

† 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवत्ययातयामान्यस्य छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति आर्षेयब्राह्मणम् (१, १) ।

---

1 श्लोकोऽयम् भा-पुस्तके लभ्यते ।

2 भा—'देवतादि०' । क-प-म-य—'देवतादिज्ञाने' । ख—'देवताविज्ञाने' ।

क्षराणि अपरिमितपादानि च, न तत्र छन्दःसम्भवः ; ऋषिदेवता-विनियोगमात्रे तेषां चरितार्थता ।[1]

[ प्रथमः खण्डः ]

निरस्तः परावसुः ॥ १ ॥

यजुरिदमाग्नेयं, प्रजापतिदृष्टम्, उत्करादिनिरसने विनियुक्तम् ।[2] अपकृष्टो भागो रक्षोऽधिष्ठानभूतः 'परावसु'रुच्यते, स चेत् 'निरस्तः' तेनैतत् स्थानं पवित्रतरमुपजातमित्यर्थः ॥ १

क्रव्यादमग्निं प्र हिणोमि दूरं
यमराज्यं गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा
देवेभ्यो हव्यं वहतु प्रजानन् ॥ २ ॥

त्रिष्टुबस्यच्छन्दः, ऋषिः प्रजापतिः, देवता अग्निः, अग्निसंस्कारे विनियोगः । 'अग्निं' 'प्रहिणोमि' प्रस्थापयामि । कुत्र ?[3] 'दूरं' लोकान्तरम् । किम्भूतम् ? 'क्रव्यादम्' आममांसादम्[4], असौ मांसान्[5] अत्तुमभिलषतीत्यमङ्गल्यत्वाद् 'यमराज्यं' यमस्याधिकारं 'गच्छतु'। किम्भूतः ? 'रिप्रवाहः' रिप्रं पापं वहति प्रापयतीति रिप्रवाहः । 'अयम्' 'इतरः' क्रव्यादादन्यो 'जातवेदाः' जातज्ञानोऽग्निः 'इह एव' परिष्कृतस्थान एव 'देवेभ्यो हव्यं वहतु' देवान् हविः

---

1 अन्त्या पङ्क्तिरियम् आ-क-पुस्तकयोरेवास्ति ।

2 भूमिकांशोऽयम् आ-भ-म-पुस्तकेषु भाष्यान्तेऽवलोक्यते ।

3 आ-भ-पुस्तकयोर्नास्ति ।

4 आ-ख-भ-म—'मांसादम्' ।

5 क-भ-म—'मानुषान्' ।

प्रापयतु। 'प्रजानन्' स्वीयमधिकारं प्रकर्षेण जानन्। अत्र क्रव्यादममङ्गल्यमग्निं दूरं प्रेषयामि, यमराज्यं गच्छतु इति पूर्वार्द्धस्य वाक्यार्थः। अयमितरो मङ्गल्यः इह एव मदीये परिष्कृतस्थान एव अत्र यज्ञे स्वीयमधिकारं जानन् देवेभ्यो हव्यं प्रापयतु इत्याशंसा उत्तरार्द्धस्य वाक्यार्थः। अनेन मन्त्रेण क्रव्यादाग्निं परित्यज्य संस्कृतस्थाने अनुष्ठातृपरम्परानुष्ठानप्रामाण्यात् महाव्याहृतिभिरग्न्यारोपणं करणीयम्॥ २

**निरस्तः परावसुः ॥ ३ ॥**

यजुरिदम्। अस्य प्रजापतिऋर्षिः, अग्निर्देवता, तृणनिरसने विनियोगः। [ मन्त्रोऽयं पूर्वं (१।१) व्याख्यातः ] ॥ ३

**आ वसोः सदने सीद ॥ ४ ॥**

यजुरिदम्, सर्व्वत्र प्रजापतिरेव ऋषिः, विशेषस्तु वक्ष्यते; अग्निर्देवता, ब्रह्मोपवेशने विनियोगः। हे ब्रह्मन्! 'आ वसोः' वसु दक्षिणारूपं धनं तद् यावद् दीयते तावत्कालं 'सदने' कुशास्तरणस्थाने 'सीद' तिष्ठ। एतेन कर्मसम्पूर्णतां यावदवस्थानं ब्रह्मणो व्यादिष्टम्। वसोरिति व्यत्ययेन पुंस्त्वम्॥ ४

**इदं विष्णु वि चक्रमे त्रेधा नि दधे पदम्।**
**समूढमस्य पांशुले ॥ ५ ॥**

गायत्रीयं, विष्णुर्देवता, अयज्ञियवाग्वचननिमित्तजपे विनियुक्ता। 'विष्णुः' व्यापकः स भगवान् 'इदं जगत् विचक्रमे' आक्रान्तवान्। कथमाक्रान्तवान्? 'त्रेधा निदधे पदम्', पृथिव्याम् आकाशे स्वर्गे च पदत्रयम् अर्पितवान् इत्यर्थः। 'अस्य' 'पांशुले' पांशुयुक्तायां भूमौ पदं 'समूढं' सम्यङ्निविष्टम्। अयमर्थः—विष्णुर्भूम्याकाश-

स्वर्गात्मकं जगत् पादेनाक्रान्तवान् ; तस्य पदं भूम्यां सम्यङ्निविष्टम्। एतेन विष्णुपदसम्बन्धेन भूमिरतीव शुद्धेति सा भूमिरस्मिन् सदने दुरुक्तादिकं समाधास्यतीति॥ ५

इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम्।
परा सपत्नान् बाधस्वान्येषां विन्दते धनम्॥ ६ ॥

वस्वन्तं रात्री 'धनम्' इत्यत्र। परमेष्ठी ऋषिः, अनुष्टुबियम्, अग्निर्देवता, भूमिजपे विनियुक्ता। हे अग्ने! यदेतत् 'भूमेः' सम्बन्धि स्थण्डिलं भवता अधिष्ठितम्, 'इदं' वयं 'भजामहे' सेवामहे गृह्णीम इति यावत्। किम्भूतमिदम्? 'भद्रं' कल्याणकरम् 'इदं' 'सुमङ्गलं' सुष्ठु मङ्गलं प्रशस्ततरमित्यर्थः। इदमिति पुनरुच्चारणमादरार्थम्। किञ्च हे अग्ने! 'सपत्नान्' शत्रून् अस्माकमित्यनुक्तमपि गम्यते, 'पराबाधस्व' सुष्ठु पीड़य। किञ्च योऽप्यनेन मन्त्रेण विवाहादि-यज्ञकर्म्मणि भवदधिष्ठितं भूमेरवयवं गृह्णाति सोऽप्यन्येषामीश्वराणां सम्बन्धि 'धनं' 'विन्दते' लभते। 'पराबाधस्वे'ति "व्यवहिताश्च" (पा० १,४,८२) इति व्यवहितोपसर्गसम्बन्धः॥६

इमं स्तोममर्हते जातवेदसे
रथमिव सम्महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य संस-
द्यग्ने सख्ये मा रिषामा वयन्तव॥ ७ ॥
भरामेध्मं कृणवामा हवींषि ते
चितयन्तः पर्वणा पर्वणा वयम्।

जीवातवे प्रतरां साधया धियो
ऽग्ने सख्ये मा रिषामा वयन्तव ॥ ८ ॥

शकेम त्वा समिधं साधया धिय-
स्ते*देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आवह ताँ+ ह्युश्मस्यग्ने
सख्ये मा रिषामा वयन्तव ॥ ९ ॥

भाष्यम् । जगतीत्रयमिदं, कौत्सऋषिः, अग्निर्देवता, पृष्ठस्य षडहस्य षष्ठेऽहनि आग्निमारुते शस्त्रे परिसमूहने च विनियोगः । तथा च गृह्यम् (गो० ४,५,५) "इमं-भराम-शकेमेति तृचेन परिसमूहेत्" । 'इमं' 'स्तोमं' स्तवं 'वयं' 'सम्महेम', "मह पूजायाम्" सम्यक् पूजोपकरणयुक्तं कुर्य्याम । कस्मै ? 'जातवेदसे' जातविद्यो वा जातधनो वा जातविज्ञानो वा जातवेदाः, तस्मै[1] । किम्भूताय ? 'अर्हते' स्तुतियोग्याय । कया ? 'मनीषया' प्रज्ञया । 'रथमिव' सारथिरित्यध्याहार्य्यम् । 'हि' यस्मात् 'नः' अस्माकम् 'अस्य' अग्नेः सकाशात् 'भद्रा' कल्याणी मुख्या वा 'प्रमतिः' प्रकृष्टा बुद्धिः 'संसदि' जनसमाजे जायते, यथा वयमपि स्तोतुं जानीमः, तस्मात् हे 'अग्ने' ! यस्त्वमेवम्भूतस्तस्य 'तव' 'सख्ये' मित्रत्वे स्थिता 'वयं' केनचिद् दुरात्मना 'मा रिषाम' मा हिंसिष्महि तदाशास्महे । सम्महेमेति रिषामेतिचात्र "अन्येषामपि दृश्यते" ( पा० ६,३,१३७ ) इति दीर्घः ॥ ७

* 'ते' इति सायणादिभिरादृतः क-सम्मतः पाठः । + ताम् इति क-सम्मतः पाठः ।

1 ख—'तदर्थम्' ।

हे 'अग्ने' त्वदर्थम् 'इध्मं' यज्ञदारु[1] 'भराम' आहराम। 'हवींषि' चरुप्रभृतीनि[2] 'पर्वणा पर्वणा' पर्वणि पर्वणि 'चितयन्तः' उपपादयन्तः[3] वयं 'कृणवाम' सम्पादयाम निर्वपामेति यावत्। तथा च श्रुतिः[4]—"अमावास्यायामामावास्येन यजेत पौर्णमास्यां पौर्णमासेन" इति। किमर्थम् ? 'प्रतराम्' अतिशयेन प्रकृष्टं सुदीर्घकालं 'जीवातवे' जीवनाय। किञ्च 'साधय धियः'—धीरिति कर्म्मणो नाम; तेनैतदुक्तं भवति,—अस्माभिः क्रियमाणानि कर्म्माणि साधय सफलानि कुरु इत्यर्थः। भरामेति "हृ-ग्रहोर्भश्छन्दसि" इति हकारस्य भकारः! पर्वणा पर्वणेति "सुपां सुलुक्"—( पा० ७,१,३९ ) इत्यादिना सप्तम्या आल्। कृणवामा इति साधया इति "अन्येषामपि दृश्यते" (पा० ६,३,१३७) इति दीर्घः॥८

हे 'अग्ने !' 'त्वम्' अस्माकं 'धियः' कर्माणि बुद्धीर्वा 'साधय' त्वदाराधनयोग्या निष्पादय, यथा 'वयं' 'त्वा' त्वां 'समिधं शकेम' परिचरितुं शक्नुयाम्। 'ते'[5] त्वयि 'आहुतं हविः' 'देवाः' इन्द्रादयः 'अदन्ति' भक्षयन्ति, त्वन्मुखत्वात् तेषाम्। अतस्त्वं 'तान्' 'आदित्यान्' अदितेः पुत्रान्[6] आवाहय; 'हि' यस्मात् तान् आदित्यान् वयम् 'उश्मसि' कामयामहे उद्देश्यत्वेन इच्छामः। 'अग्ने',

---

1 ख—समिधं 'समिन्धनार्थमिध्ममुच्यते तत्'।

2 ख—'यवादीनि'।

3 ख—'उत्पादयन्तः'। क—'त्वां ज्ञापयन्तः'।

4 भ—'स्मृतिः'।

5 क— 'त्वे'।

6 ख—'अदितेरपत्यानि आदित्याः सर्वदेवा उच्यन्ते तान् आदित्यान् इन्द्रादीन् इत्यधिकम्।

मख्ये, मारिषाम वयं तव' इति सर्व्वत्र तुल्यम्[1] शकेम इति "लिङ्याशिष्यङ्" (पा० ३,१,८६)। समिधमिति तुमर्थे "शकि णमुल्कमुलौ" (पा० ३,४,१२) इति कमुल्। साधया इति "अन्येषामपि"—(पा० ६, ३,१३७) इति दीर्घः। ते इति सप्तम्यर्थे षष्ठी। 'आदित्याँ' 'ताँ' इति "दीर्घादटि समानपादे" (पा० ८,३,६) इति रुत्वं, यलोपः, "आतोऽटि नित्यम्" (पा० ८,३,३) इत्यनुनासिकः। 'उश्मसि' इति वश कान्तौ, "ग्रहीज्या"दि—(प०६,२,१६) सूत्रेण सम्प्रसारणम्, "इदन्तो-मसि" (पा० ७,१,४६) इति इकारान्तता ॥ ६

पवित्रे स्थो वैष्णव्यौ ॥ १० ॥

यजुरिदमाज्यसंस्कारे विनियुक्तं पवित्रदेवतम्। हे 'पवित्रे' युवां 'वैष्णव्यौ' विष्णुदेवताके "विष्णुर्वै यज्ञः"। यज्ञार्हे 'स्थः' भवथः[2] ॥ १०

विष्णोर्म्मनसा पूते स्थः ॥ ११ ॥

निगदव्याख्यातम्। आर्षादिकं तुल्यं पूर्वेण ॥ ११

देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः स्वाहा ॥ १२ ॥

अत्र आज्यं देवता आज्योत्पवने विनियोगः। हे आज्य! 'त्वा' त्वां 'देवः' दानादिगुणयुक्तः 'सविता' 'अच्छिद्रेण' अच्छिन्नाभ्याम् अव्यवच्छिन्नाभ्यां 'पवित्रेण' आभ्यां पवित्राभ्यां 'उत्-

---

1 अंशोऽयम् ख-पुस्तकमात्रलभ्यः।

2 ख—'पवित्रे—"पुङः खर्ग्गे लू धू" इत्यनुवर्त्तमाने "पुवः संज्ञायाम्" इति ताच्छीलिक इत्रन् प्रत्ययान्तः औ पवित्रशब्दः।' इत्यधिकम्।

पुनातु' ऊर्द्ध्ववत् पवित्रीकरोतु अज्ञातकेश-कीटादिसंसर्गदोषम् अपनयतु। किञ्च वसु तेजः तत्प्रधानत्वात् सोऽपि तथोच्यते[1] तस्य 'वसोः सूर्य्यस्य' 'रश्मिभिः' किरणैः त्वाम् उत्पुनातु इति सम्बन्धः। अभिधानाभिप्रायेण सविता सूर्य्यादन्यः[2]। पवित्रेणेति व्यत्ययेनैकवचनम्। स्वाहेति मन्त्रशेषः। अस्य मन्त्रस्य शाखान्तराम्नातस्य कर्मार्थसमर्थनार्थमुपन्यासः[3] ॥ १२

**अदितेऽनु मन्यस्व ॥ १३**

यजुरिदम् अदितिदैवतं पर्य्युक्षणे विनियुक्तम्। अदितिर्देवमाता[4], सा हि सर्वत्र कर्मणि अनुज्ञाप्यते। हे 'अदिते'! त्वं माम् 'अनुमन्यस्व' अनुजानीहि "त्वं शोभनं कर्म कुरु" इत्येवं ब्रूहि। त्वया ह्यनुज्ञातः कर्म कुर्वन् दृष्टफलभाग् भवतीति। १३

**अनुमतेऽनु मन्यस्व ॥ १४**

यजुरिदम् अनुमतिदैवतम्। अनुमतिर्नाम देवता[5] सर्वकर्मणामनुमन्त्री। तया ह्यनुमतानि कर्माणि क्रियमाणानि फलवन्ति। अनुमतिः कलोना पौर्णमासी इत्येके। सापि पूर्ववदनुज्ञाप्यते। हे 'अनुमते'! माम् 'अनुमन्यस्व' अनुजानीहीत्यर्थः ॥ १४

**सरस्वत्यनु मन्यस्व ॥ १५**

यजुरिदं सरस्वतीदैवतम्। सरस्वती वागधिष्ठात्रीदेवता नदी वा। सापि पूर्ववदनुज्ञाप्यते। हे 'सरस्वति'! माम् 'अनुमन्यस्व'।

---

1 का—'तत्प्रधानत्वात् वसुः सूर्यः'।

2 का—'यावदभिधानाभिप्रायेण सवितुः सूर्यादन्यः सविता'।

3 अंशोऽयम् का-पुस्तक एव दृश्यते।

4 मे—'अदितिदेवता'।

5 का—'देवताभेदः'।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥ १६

यजुरिदं सवितृदैवतम्। बह्वन्यत्र क्रियापदानि, प्रतिक्रियापदञ्च मन्त्रसमाप्तिर्युक्ता। हे 'देव' दानादिक्रियायुक्त 'सवितः' कर्मणोऽनुज्ञातः सन् 'प्रसुव यज्ञं' यज्ञशब्देन वर्तमानं कर्म उच्यते, तत् प्रसुव अनुजानीहि। तथा 'यज्ञपतिं' यजमानं 'प्रसुव' यज्ञस्वामिनं माम् अनुजानीहि। 'भगाय' कर्मफलभाजनाय। त्वया ह्यनुज्ञातोऽनुष्ठितकर्मफलभाग् भवति ; भज्यते सेव्यते भग इति कर्मफलमिहोच्यते, तद्धि कर्तृभिः सेव्यते। किञ्च 'दिव्यो गन्धर्वः केतपूः'—दिवि भवो दिव्यः ; गौः पृथिवी तत्स्थान् रसान् रश्मिभिः धयति पिवति[1] इति गन्धर्वः सूर्यः ; केतं चित्तं[2] पुनाति इति केतपूः। स एवम्भूतो 'नः' अस्माकं 'केतं' चित्तं 'पुनातु' निर्मलीकरोतु कर्मसाधनयोग्यं करोतु इत्यर्थः। किञ्च 'वाचस्पतिः' प्राणः[3] नः अस्माकं 'वाचं' 'स्वदतु' आस्वादयतु स्तोतव्यस्य देवताविशेषस्य प्रीतिकरीं करोतु इत्यर्थः। तदेवमत्र आदित्यो गन्धर्वरूपेण प्राणरूपेण च स्तूयते। एकमेवेदं ज्योतिस्त्रिधा व्यवस्थितम् आदित्यात्मना विद्युदात्मना अग्न्यात्मना चेति ॥ १६

तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्त्वञ्च वाक् च मनश्चात्मा च

---

1. मि—धारयति। 2. क—प्रज्ञाम्। 3. भा—गुरुः।

ब्रह्म च तानि प्र पद्ये तानि मामवन्तु भूर्भुवः स्वरोम् महान्तमात्मानं प्र पद्ये[1] ॥ १७

विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्या पर्णे गृहान्तरिक्षे विमितं हिरण्मयम्। तद्देवानां हृदयान्ययस्मये कुम्भेऽन्तः सन्निहितानि। तानि बलभृच्च बलसाच्च रक्षतोऽप्रमणी अनिमिषत् तत् सत्यम्। यत् ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति। त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुप धावत्युप त्वा धावामि। जपन्तं मा मा प्रति जापीर्जुह्वन्तं मा मा प्रति हौषीः कुर्वन्तं मा मा प्रति कार्षीः। त्वां प्र पद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे राध्यतां तन्मे समृध्यतां तन्म उप पद्यताम्। समुद्रो मा विश्वव्यचा ब्रह्माऽनु जानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनु जानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनु जानातु। तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥ १८

---

1. मै क-ग्रन्थयोः प्रपद-मन्त्रस्यास्य भूरित्यारभ्य प्रपद्य इत्यन्तो मन्त्रभागो ऽनन्तर-पठितस्य विरूपाक्ष-मन्त्रस्यादिभागतया गृहीतो दृश्यते।

यजुरिदम्। परमेष्ठी ऋषिः, रुद्ररूपोऽग्निर्देवता, विरूपाक्षजपे विनियोगः। 'तपः' उपवासादि, 'तेजः' प्रकाशात्मकम्, 'श्रद्धा' चित्तस्य कालुष्योपशमो[1] धर्मः, 'ह्रीः' लज्जा, 'सत्यम्' यथार्थवादित्वम्, 'अक्रोधः' प्रतिकूलविषयेऽपि मनसः प्रसादः, 'त्यागः' न्यायार्जितस्य धनस्य विधिना विसर्गः, 'धृतिः' सौमनस्यं, 'धर्मः' यज्ञकर्म, 'सत्त्वं' आत्मनि प्रकाशात्मको[2] गुणः, 'वाक्' वचनविषयम् इन्द्रियम्, 'मनः' हृत्प्रतिष्ठितम्[3], 'आत्मा' क्षेत्रज्ञः, 'ब्रह्म' परं तत्त्वम्। सर्वे चकाराः परस्परापेक्षया समुच्चयार्थाः। 'तानि' तपःप्रभृतीनि, 'प्रपद्ये' शरणं गच्छामि। अतः 'तानि' तपःप्रभृतीनि ब्रह्मपर्यन्तानि इमं यज्ञं कुर्वन्तं 'माम्' 'अवन्तु' रक्षन्तु। 'भूः' पृथिवी, 'भुवः' अन्तरिक्षम्, 'स्वः' द्यौः, 'ॐ' आत्मा ; एते यदात्मानः तं[4] 'महान्तम्' अनन्तम् आत्मानं रुद्राग्निरूपं[5] 'प्रपद्ये' प्रपन्नोऽस्मि ॥ १७

'विरूपाक्षः' नानाप्रकारेन्द्रियः[6] 'असि' भवसि। तथा च स्मृतिः[7]—

"सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः।

विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु॥" इति॥[8]

'दन्ताञ्जिः' दन्तान् अनक्ति व्यञ्जयतीति औणादिक इञ्, "अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु" ( धा० ७,२११ ) व्यक्तदन्त[9] इत्यर्थः। 'तस्य' एवम्भूतस्य 'ते' तव 'शय्या' शयनस्थानं 'पर्णे' उपलेपनोल्लेखनाभ्युक्षणादिभिः संस्कृते स्थण्डिले "भूमौ स्थानमग्नेः" इति श्रुतेः। तथा 'गृह'

---

1. कालुष्यापगमो। 2. भा—आत्मप्रकाशकः।

3. मै—वाक् वचनम्, मनः इन्द्रियविशेषः।

4 मै—ततः। 5. भा—कालाग्निरुद्ररूपम्।

6. मै—नानारूपनेत्री भवसि। क—नानारूपधरोऽसि।

7. मै—क—तथाच श्रुतिः (?)। 8. भा—मै—अतो विरूपाक्षोऽसि इत्यधिकम्।

9. व्याख्यानपदमिदं मै·पुस्तके मुद्रापितं नास्ति।

गृहञ्च 'अन्तरिक्षे' भुवर्लोके 'विमितं' निर्मितं हिरण्यगर्भप्रभृतिभिः। कीदृशं तद् गृहम्? 'हिरण्मयं' सुवर्णमयम्। तथा च श्रुतिः—"ज्वलितमग्निं प्रविशन्तमन्तरिक्षम्।" 'तत्' तस्मिन् गृहे 'देवानाम्' इन्द्रादीनां 'हृदयानि' तिष्ठन्तीति वाक्यशेषः। तैर्देवहृदयैः सहैकस्थितोऽग्निः प्रार्थ्यते—हे अग्ने! कदा पुनस्त्वमस्माकं हविरानयिष्यसीति अग्निमुखत्वाद् देवानाम्। कस्मिन्निव? 'अयस्मये' लौहमये 'कुम्भे' घटे इव। 'अन्तः' मध्ये अग्नौ[1] 'सन्निहितानि' एकीभूतानि 'तानि' देवहृदयानि 'बलभृच्च' बलम् उपचयं बिभर्त्ति पुष्णातीति बलभृत् आत्मभक्तानाम्[2], तथा बलं सादयति अवसादयति विपक्षाणामिति 'बलसात्', अग्नेः प्रतीहारौ एतौ 'रक्षतः' प्रतिपालयतः। किम्भूतौ? 'अप्रमणौ' अप्रमादिनौ। पुनः किम्भूतौ? 'अनिमिषत्' अनिमिलिताक्षौ। यदेतत् तौ रक्षतः 'तत्' 'सत्यम्' ताभ्यां हि रक्षिते अग्नौ यजमानः श्रद्धावान् पत्नीसहितः पशु-पुरोडाशादि जुहोति। 'यत्' 'ते' तव संवत्सराख्यस्य यज्ञस्य 'द्वादश पुत्राः' अग्न्याख्याः, ते 'संवत्सरे संवत्सरे' 'कामप्रेण' अभिलाषपूरकेण 'यज्ञेन' ज्योतिष्टोमादिना यजमानं 'याजयित्वा' 'पुनः' 'त्वा' त्वां 'ब्रह्मचर्य्यं' ब्रह्मभूतम् 'उपयन्ति' प्रविशन्ति। हे अग्ने 'त्वं' 'देवेषु' देवलोकेषु 'ब्राह्मणः असि', 'अहं' 'मनुष्येषु' मनुष्यलोकेषु। 'ब्राह्मणः' 'वै' यतः 'ब्राह्मणमुपधावति' ब्राह्मणमेवोपसेवते, अतः 'त्वा' त्वाम् 'उपधावामि' परिचरामि। उपधावनस्य कारणमाह—'जपन्तं मा मा प्रतिजापीः, जुह्वन्तं मा मा प्रतिहौषीः, कुर्वन्तं मा मा प्रतिकार्षीः'। एतदुक्तं भवति—जप-होम-कर्मकाले मम त्वं प्रातिकूल्यं मा गाः। अतः 'त्वाम्' अहं 'प्रपद्ये' प्रपन्नोऽस्मि, 'त्वया' 'प्रसूतः' अनुज्ञातः 'इदं' प्रस्तुतं 'कर्म' 'करिष्यामि'। यत एवमतः 'तत्' कर्म 'मे' मम त्वत्प्रसादात्

---

1-2. क्वा—पुस्तकादन्यत्र न दृश्यते।

'राध्यतां' संसिध्यताम् । 'तत्' 'मे' 'समृध्यतां' संवर्धतां सम्पूर्णञ्च भवतु इत्यर्थः । 'तत्' 'मे' 'उपपद्यतां' फलदानसमर्थं जायताम् । यत् ते द्वादश अग्नयः पुत्रा इत्युक्तं तान् नामप्रयोगेण कतिचिद् दर्शयितुमाह— समुद्र इव 'समुद्रः', विश्वं व्यश्नुति[1] विविधं गच्छतीति 'विश्वव्यचाः' पदार्थेऽध्यक्षः, 'ब्रह्म' नामाग्निः, तथा 'तुथः' अग्निः, 'विश्ववेदाः' सर्वस्य वेदिता, तथा 'ब्रह्मणः पुत्रः', तथा 'श्वात्रः' अग्निः, तथा 'प्रचेताः' प्रकृष्टमना अग्निः, तथा 'मैत्रावरुणः', अस्मिन् कर्मणि प्रवृत्तं 'मा' माम् 'अनुजानातु' अनुज्ञां ददातु इत्यर्थः । हे अग्ने ! यस्त्वमनेकप्रकारः प्रागुक्तः 'तस्मै' तुभ्यं 'विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः' । 'गृह' 'तत्' 'अनिमिषत्' इति सुब्लुक् ( पा० ७, १, ३९१ ) । 'अयस्मये' इति "अयस्मयादीनि छन्दसि" ( पा० १,४, २० ) इति भसंज्ञा । 'अप्रमणी' इति प्रकटं मनः प्रमणः तद् यस्य अस्ति इति "छन्दसीवनिपौ च वक्तव्यौ" ( वा०—पा० ५,२,१२२ ) इति ईकारप्रत्ययः टिलोपश्छान्दसः "वा छन्दसि" ( ६,१,१०६ ) इति पूर्वसवर्णः । कामप्रेण इति "प्रा पूरणे" (धा० २,५१) "आतोऽनुपसर्गे कः" ( पा० ३,२,३ ) । 'उप त्वा धावामि' इति व्यवहितोपसर्गसम्बन्धः । जुह्वन्तम् इति छान्दसो नुम् ।

इति छान्दोग्यमन्त्रभाष्ये प्रथमं खण्डम् ।

---

1. मै—विषति ।

पाहि नो अग्न एनसे ॥ १

यजुरिदमाग्नेयम् प्रायश्चित्तहोमे विनियुक्तम्। हे 'अग्ने'! 'एनसे' एनसः अस्माङ्कयज्ञकृतात् पापात् 'नः' अस्मान् 'पाहि'। एनसे इति पञ्चम्यर्थे चतुर्थी ॥ १

पाहि नो विश्व वेदसे ॥ २

वैश्वदेव्यं यजुः। हे 'विश्व' विश्वे देवाः। 'वेदसे' वेदसः अस्माङ्क-यज्ञजनितपापसम्भूताया वेदनायाः सकाशात् 'नः' 'पाहि'। विश्व इति सामान्यापेक्षायामेकवचनम्। वेदसे इति "विद वेदनाख्यान-निवासेषु" "सर्वधातुभ्योऽसुन्" ( उ० ४,१८८ )। चतुर्थी पूर्ववत् ॥ २

यज्ञं पाहि विभावसो ॥ ३

विभावसुर्देवता। हे 'विभावसो' मया क्रियमाणं 'यज्ञम्' अस्माङ्कमपि 'पाहि' ॥ ३

सर्व्वं पाहि शतक्रतो ॥ ४

शतक्रतुर्देवता। हे 'शतक्रतो'! 'सर्व्वं' सवो यागः तत्र भवं फलं 'पाहि'। विगुणेऽपि यज्ञे यथोक्तफलप्रदो भव। सव्यमिति "भवे छन्दसि" ( पा० ४,४, ११० ) इति यत् ॥ ४

पाहि नो अग्न एकया पाह्युत द्वितीयया।
पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥ ५

अनुष्टुबियमाग्नेयी। हे 'अग्ने' हे 'वसो' हे 'ऊर्जाम्पते' बलवतां श्रेष्ठ, त्रितयमप्येतद् वह्निसम्बोधनम्। 'एकया' 'गिरा' आशीर्वाद-रूपया 'नः' अस्मान् 'पाहि'। 'उत' प्रकारभेदे 'द्वितीयया' तादृश्या नः अस्मान् 'पाहि'। तथा 'तिसृभिः'। तथा 'चतसृभिः' 'गीर्भिः' ॥ ५

**पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा ।**
**पुनर्नः पाह्यंहसः ॥ ६ ।**

गायत्रीयम् । हे 'अग्ने' 'ऊर्जा' बलेन मां प्रति देयत्वेन अभिमतेन 'पुनः' 'निवर्तस्व' मह्यं बलं दातुं निवर्तस्व इति तात्पर्य्यम् । 'पुनः' 'इषायुषा' इच्छतीति इषः "इगुपध-ज्ञा प्री-किरः कः" (पा० ३,१,१३५) तस्य आयुः इषायुः तेन एकपुरुषायुषा देयत्वेन अभिमतेन मां प्रति निवर्तस्व मह्यम् इच्छवे आयुर्दातुं निवर्तस्व इति तात्पर्य्यम् । तथा 'पुनः' अस्माकं यज्ञकलात् 'अंहसः' पापात् 'नः' अस्मान् 'पाहि' ॥ ६

**सहर्जा[1] नि वर्तस्वाग्ने पिन्वस्व धारया ।**
**विश्वप्स्न्या विश्वतस्परि ॥ ७**

हे 'अग्ने' 'विश्वतः परि' विश्वं परित्यज्य 'ऋजा' ऋजुत्वेन देयत्वेन अभिमतेन सह मां प्रति 'निवर्तस्व' मह्यं ऋजुतां दातुं निवर्तस्व इति तात्पर्य्यम् । ततो 'विश्वप्स्न्या' देयत्वेन अग्निसम्बन्धिन्या धारया घृतधारया 'पिन्वस्व' प्रीणीहि अर्थात् आत्मानमेव । ऋजा इति 'सुपां सुलुक्' (पा० ७, ,३९) इत्यादिना तृतीयेकवचनस्य डादेशः, टिलोपः । पिन्वस्व इति "पीङ आप्यायने" इत्यस्मात् धातोः व्यत्ययेन हिविकरणतया श्नः श्नश्च यणादेशः छत्वश्च । विश्वप्स्न्या इति विश्वं प्साति भक्षयति इति "श्वन्-उक्षन्-पूषन्-प्लीहन्-क्लेदन्-स्नेहन्-मूर्द्धन्-मज्जन्-अर्य्यमन्-विश्वप्सन्-परिज्मन्-मातरिश्वन्-मघवन्निति" (उ० १,१६०) इति कनिन्नन्तो विश्वप्सन्-शब्दोऽग्निवाची ततो धारायामर्थे "ऋन्नेभ्यो ङीप्" (पा० ४,१,५१) इति ङीप्, उपधालोपः । विश्वतः परि इति परिवर्जने कर्मप्रवचनीयसंज्ञकस्य योगे "पञ्चम्य-

1. मुद्रापितेष्वाकरग्रन्थेषु 'सह रय्या' इत्येव पाठः, तदनुसारं क-पुस्तके 'रयिणा धनेन' इति 'मह्यं धनं दातुम्' इति च यथास्थानं संशोधितौ वर्तेते भाष्यग्रन्थः ।

पाङ् परिभिः" (पा० २,३,१०) इति पञ्चमी, पञ्चम्यास्तसिल्, "कुप्वोः≍क≍पौ च" (पा० ८,३,३७) इत्युपध्मानीयः ॥ ७

आम्नातं यदनाम्नातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्वं हि वेत्थ यथायथम् ॥ ८

अनुष्टुबियमाग्नेयी । श्रुत्वा यत्र यत् नियुक्तं तत् आम्नातम् । अन्यत् अनाम्नातम् । अस्य 'यज्ञस्य' 'यत्' 'आम्नातं' यच्च 'अनाम्नातं' 'मिथु' अन्योन्यम् अत्र नियुक्तम् अन्यत्र अन्यत्र नियुक्तम् अत्र 'क्रियते' 'तत्' 'अस्य' यज्ञस्य हे 'अग्ने' त्वं 'कल्पय' समर्थय यथायोगं प्रापय । 'हि' यस्मात् 'त्वं 'यथायथं' यथास्वं 'वेत्थ' जानासि ॥ ८

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥ ९

पङ्क्तिरियं प्राजापत्या । हे 'प्रजापते' जगत्प्रभो यानि 'एतानि' 'विश्वा' विश्वानि सर्वाणि त्वत्तः सकाशात् 'जातानि' जरायुजाण्डजोद्भिज्जानि तानि 'त्वत्' 'अन्यः' कश्चित् 'न' 'परिता' पालयिता 'बभूव'। यतः एवम्भूतो भवान् अतः वयं 'यत्कामाः' यदिच्छवः सन्तः 'ते' त्वदर्थं 'जुहुमः' त्वामुद्दिश्य आहुतिं न्यस्यामः[1] तस्य फलं 'नः' 'अस्तु' त्वत्प्रसादेन । किञ्च 'वयं' 'रयीणां' धनानां 'पतयः' 'स्याम' भवेम । विश्वा इति "शेश्छन्दसि बहुलम्" (पा० ६,१,७०) इति लुक्, नुम्-प्रत्ययलक्षणेन दीर्घत्वम्, न-लोपः ॥ ९

1. आ—अग्नौ एनाम् आहुतिं क्षिपामः ।

आ कृष्णेन रजसा वर्तमानो
निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना
देवो याति भुवनानि पश्यन् ॥ १०

'सविता' आदित्यः 'आयाति' आगच्छति। 'देवः' दानादिगुण-युक्तः। केन? 'रथेन'। किम्भूतेन? 'हिरण्ययेन' सुवर्णमयेन। किं कुर्वन्? 'भुवनानि पश्यन्' भुवनवर्तिनो मनुष्यान् प्रकाशाप्रकाशपाप-कर्तॄन् साक्षिवन्निरीक्षमाणः। तथा 'निवेशयन्' स्वेषु स्वेषु व्यापारेषु समावेशयन्। कम्? 'अमृतं मर्त्यञ्च' देवान् मनुष्यांश्च। सूर्योदये मनुष्याः स्वेषु कर्मसु वर्तमाना देवान् प्रीणयन्ति, प्रीताश्च देवा वृष्ट्या-दिना मनुष्यानाप्याययन्ति, तेन देवमनुष्याणां परस्परोपसंश्लेषः। किम्भूतः सविता? 'रजसा' रात्रिकालेन नक्त 'कृष्णेन' मलिनेन 'आवर्त-मानः' अनुदिनं परावर्तमानः। प्रायेण रात्रिकालस्य रागजनकत्वात् रजस्त्वम्, पुण्यकर्मणामवरोधाच्च कृष्णत्वम्। अयमर्थः—यः सविता देव-मनुष्यव्यापारे व्यवस्थापकः, यश्च कर्मभूमिवर्तिनां पाप-पुण्यसाक्षी प्रत्यहं समायाति, तस्मै वयमर्चनां कुर्मः। आवर्तमानः, आयाति, इति व्यवहितोपसर्गसम्बन्धः। हिरण्ययेन इति "ऋत्व्यवास्त्वे"त्यादिना (पा० ६,४,१७५) हिरण्मयशब्दः छन्दसि निपातितः॥ १०

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्[1]।
भवा वाजस्य सङ्गथे ॥ ११

हे 'सोम' 'वृष्णं'[1] वृष्टिभवं जलं[2] 'ते' तव 'समेतु' सङ्गच्छतां त्वत्-

---

1 क्षा-भ-मै—वृष्ण्यम्।

2 क—वृष्णि (वर्षके मेघे) भवं जलम्। ख—'वृष्णो वासवाज्जायत इति वृष्णं' वृष्ट्युदकम्'।

सान्निध्यं यातु। अतस्त्वं 'विश्वतः' विश्वम् 'आप्यायस्व'। अत एव 'वाजस्य' अन्नं 'सङ्गथे' सङ्गमे 'भवा' भव। "वृष्टेरन्नम्" इति स्मृतेः। चन्द्रस्तुतिरेषा। आप्यायस्व इत्यन्तर्भावितण्यर्थः सकर्मकः। विश्वत इत्याद्यादित्वेन द्वितीयान्तात्तसिः। वृष्ण्यमिति वृष्णो वासवाद्भवतीति "भवे च्छन्दसि" (पा० ४,४,११०) इति यत्, छान्दस उपधालोपः[1]। भवा इति "द्व्यचोऽतस्तिङः" (पा० ६,३,१३५) इति दीर्घः। सङ्गथ-शब्दः सङ्गमवाची॥ ११

**अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम्।**
**अपां रेतांसि जिन्वति॥ १२**

'अयं' भौमः 'अग्निः मूर्धा' अत्यन्ततेजोरूपतया नितान्तलोहितत्वादन्येः प्रधानभूत इव। तथा 'दिवः' आकाशस्य 'ककुत्' चिह्नं भूषणमित्यर्थः। वृष्टिकर्तृत्वात् 'अपां' जलानां 'पतिः' अत एव 'पृथिव्याः' 'रेतांसि' बीजानि 'जिन्वति' प्रीणाति सफलीकरोतीत्यर्थः। अग्निरिति "सुपां सुलुक्" (पा० ७,१,३९) इत्यादिना ङसः सुः। "जिवि प्रीणनार्थः" इत्यस्य नुमि शपि तिपि जिन्वतीति रूपम्॥ १२

**अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य।**
**आदाशुषे जातवेदो वहा त्वमद्या[2] देवाँ उषर्बुधः॥ १३**

हे 'अग्ने'! 'जातवेदः' स्मार्त्त-श्रौताग्निसम्बोधनम्। 'त्वम्' 'उषर्बुधः' असि उषसि बुध्यसे प्रातराहुतिग्रहणाय जागर्षि, अत एव त्वं बुधरूपोऽसि, सोऽपि उषसि बुध्यते, आदित्यानुगतत्वात् तस्य। एतेन बुधरूपित्वं वह्नेरादर्शितम्। एवञ्च 'देवान्' प्रधानकर्मभूतान् 'अद्याः' [2]अद्यान् प्रातराहुतौ प्रयुज्यमानान् भक्ष्यगणान् 'आवह' प्रापय। किम्भूतस्त्वं बुधश्च? 'राधः' आराधनीयः, 'अमर्त्यः' देवस्वरूपः।

---

1 य-सा-पुस्तकमात्रलभ्यमिदम्। 2 सा-मै—अद्यान्।

किमर्थम् आवह ? 'विवस्वत्' विवस्वते सूर्यार्थम्। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" इति स्मरणात्। वह्निना सूर्यार्थम् ऊढाम् आहुतिं देवा अदन्ति। किम्भूताय विवस्वते ? 'उषसः' उषसि 'चित्रं' रूपम् 'आदाशुषे' उपात्तवते। विवस्वदिति सुब्लुक्। उषसः इति "चतुर्थ्यर्थे बहुलं छन्दसि" (पा०,२,६९) इति बहुलवचनात् सप्तम्यर्थे षष्ठी। राधः इति कर्मणि घञ्। आदाशुषे इति "दाश्ट दाने" आङ्-पूर्वः, लिटः क्वसुः, "दाश्वान् साह्वान् मीढ्वांश्च" (पा ६,१,१२) इति अद्वित्वम् अनिट्त्वञ्च, चतुर्थ्येकवचने "वसोः सम्प्रसारणम्" (पा० ६,४, १३१), "शासिवसिघसीनाञ्च" (पा० ८,३,६०) इति षत्वम्। वहा इति "छन्दसि परेऽपि" (पा० १,४,८१) इत्याङः परप्रयोगः। अद्या इति "कृत्यल्युटो बहुलम्" (पा० ३,३,११३) इति ण्यद्विषये यत्, व्यत्ययेन शसो जस्[1]। देवा इति "दीर्घादटि समानपादे" (पा० ८,३,९) इति रुत्वम्, "आतोऽटि नित्यम्" (पा० ८,३,३) इत्यनुनासिकः, रेफस्य यत्वं यलोपश्च[2]। उषर्बुध इति पृषोदरादित्वात् सकारस्य रेफः। बुध-स्वरूपित्वमग्नेः प्रकटयन्तो बुधार्चने युज्यते ऋगियम्॥ १३

बृहस्पते परि दीया रथेन

रक्षोहामित्राँ अप बाधमानः।

प्रभञ्जत्सेनाः[3] प्रमृणो युधा जयन्[4]

अस्माकमेध्यविता रथानाम्॥ १४

हे 'बृहस्पते'! त्वं 'रथेन' 'परिदीयाः' पर्यट। 'अमित्रान्' शत्रून् 'अपबाधमानः'। किम्भूतस्त्वम् ? 'रक्षोहा' राक्षसहन्ता। तथा 'प्रभञ्जतां' विमर्दं कुर्वतां दैत्यानां 'सेनाः' सैन्यानि[5] 'युधा' युद्धेन

1 मे—पुस्तके व्याकरणादिव्याकरणसन्दर्भो न दृश्यते।

2 मै—यत्व-यलोपौ। 3 'प्रभञ्जत्सेना.' इति क-धृत आकरदृष्टः पाठः।

4 भा-म-मै—प्रमिणो युधायथन्। 5 क—सेनाः दैत्यानां सैन्यानि प्रभञ्जन् विमृदन्।

'प्रमृणो' प्रक्षिप[1]। तथा 'जयन्' सन्[2] 'अस्माकं' 'रथानाम्' 'अविता' 'एधि' पालको भव इति देवैः स्तूयते। परिदोयाः इति "दोङ क्षये" परिपूर्वः, आशिषि लिङ्, व्यत्ययेन परस्मैपदम्, सिप्, यासुट्। अमित्रां इति पूर्ववत् त्वादि। प्रमृणो इति "डुमिञ प्रक्षेपणे" मृः, "वा छन्दसि" (पा० ३,४,८८) इति हेः अपित्त्वस्य विकल्पितत्वात् ङित्त्वाभावे सति गुणः, इकारस्य वर्णव्यत्ययेन ऋकारः[3] ॥ १४

**शुक्रन्ते अन्यद् यजतन्ते अन्यद्**
**विषुरूपे[4] अहनी द्यौरिवासि ।**
**विश्वा हि माया अवसि स्वधावन्**
**भद्रा ते पूषन्निह रातिरस्तु ॥ १५**

हे 'अहनी'! युवां 'शुक्रं यजतम्' शुक्रार्चनं प्रति अधिकरणभावम् उपागच्छतम्। तयोरह्नोर्मध्ये हे 'स्वधावन्'। 'ते' तव अहः 'अन्यत्' त्वदर्चनप्रयुक्तत्वात्। तथा हे 'पूषन्!' 'ते' तव अहः 'अन्यत्' भवदाराधनप्रयुक्तत्वात्। अयं भावः—यस्मिन् अहनि स्वधावा अर्च्यते न तत्र पूषा, यत्र च पूषा न तत्र स्वधावा; शुक्रः पुनरुभयत्रापि अर्च्यते, एकस्मिन् अहनि स्वधाव्ना सह, अपरस्मिन् अहनि पूष्णा सह, अतएव हे 'अहनी' 'विषुरूपे'[1] नानारूपधारिणी। तेन दिनद्वयसाध्ये यागे अह्नोः सम्बोधनपूर्वक आदेशोऽयम्। तथा हे 'स्वधावन्'! स्वधया श्राद्धकर्मोपलक्ष्यते, सा यस्यास्ति स सम्बोध्यते हे स्वधावन्! श्राद्धदेव! सूर्य! त्वं 'द्यौरिव असि' आकाश इव व्यापको भवसि। तथा 'हि' यस्मात् 'विश्वाः' 'मायाः' 'अवसि'—आविद्यकत्वात् संसारस्य मायारूपत्वम्—जगद्रूपा मायाः गोपायसि। "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः सूर्य एव

1 क—प्रमृणः प्रकर्षेण हिंसन्।
2 भ—तथा च यन् सन्। भा-मै—आययन् गमयन् सन् अर्थादभीधान्।
3 इकारस्येत्याद्यंश आ क-मै—पुस्तकेषु नास्ति। 4 आ-भ-य-मै—विश्वरूपे।

जगतः पालयिता। तथा हे 'पूषन्'! 'इह' यज्ञे 'भद्रा' शुभप्रदा 'रातिः' आशीर्वादरूपं ते तव दानम् अस्तु। सूर्य-पूष-शुक्राणाम् अनु-कीर्तनात् शुक्रार्चनेऽपि उपयुक्ता ऋगियम्। स्वधावन् इति "छन्दसो-वनिपौ च वक्तव्यौ" (वा०—पा० ५,२,१२२) इति मत्वर्थे वनिप् ॥१५

**शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये।**
**शंयोरभिस्रवन्तु नः ॥१६**

आपः 'नः' अस्माकं 'शं' कल्याण्यो 'भवन्तु'। किम्भूताः? 'देवीः' देव्यः स्तुत्यादिविषयाः। किमर्थम्? 'अभिष्टये' उपचयार्थम्, 'पीतये' पानाय च। किञ्च 'नः' अस्मान् 'अभिस्रवन्तु'। किमर्थम्? 'शंयोः' कल्याणयोगाय। आपः अस्माकम् उपचयाय पानाय कल्याणसंयोगाय च भवन्तु इत्याशंसावाक्यार्थः। शनिरनेन पूर्वं ग्रहत्वेऽभिषिक्त इति तन्मन्त्रोऽयम्। देवीः इति "वा छन्दसि" (पा० ६, १,१०६) इति पूर्वसवर्णः। अभिष्टये इति "ष्ट्यै स्त्यै शब्द-सङ्घातयोः" अभिपूर्वः, क्विप्, "स्त्यः प्रपूर्वस्य" (पा० ६,१,२३) इति योगविभागात् सम्प्रसारणम्, तादर्थ्ये चतुर्थी। शंयोः इति शंशब्दात् "कंशंभ्याम्" (पा० ५,२,१३८) इत्यादिना युस्, चतुर्थ्यर्थे षष्ठी ॥१६

**कया नश्चित्र आभुवदूती सदावृधः सखा।**
**कया शचिष्ठया वृता ॥१७**

'चित्रे' चयनकर्म्मणि प्रयोजकः इन्द्रः 'कया ऊती' ऊत्या केन तर्पणेन 'नः' अस्माकं 'सदावृधः' सर्वदा वृद्धिकारो 'आभुवत्' भूयात्? 'कया' च 'आवृता' क्रियया चित्रेण 'सखा' मित्रम् आभुवत् भूयात्? किम्भूतया आवृता? 'शचिष्ठया', शचीति कर्म्मणो नाम, इष्ठन्, सातिशयकर्मवत्या। केन तर्पणेन कया वा क्रियापरिपाट्या इन्द्रः अस्माकं वृद्धिकारो सखा च भूयात् इति प्रश्नो वाक्यार्थः। त्वया

कथिते वयं तत् अनुतिष्ठामः। पूर्वम् अनेन राहुरभिषिक्तः इति तत्-प्रियोऽप्ययं मन्त्रः। ऊतो इति "ऊति-यूति-जूति" (पा० ३,३,९७) इत्यादिना क्तिन्, तृतीयैकवचनम्, "सुपां सुलुक्" (पा० ७,१,३९) इत्यादिना पूर्वसवर्णः। आभुवत् इति आशंसायां लिङर्थे लेट्, "लेटोऽडाटो" (पा० ३,४,९४) इति अटि धातोरुवङ्, "इतश्च" (पा० ३,४,९७) इत्यादिना इकार लोपः। वृधः इति "इगुपधज्ञाप्रीकिरः कः" (पा० ३,१,१३५) ॥ १७

केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे।
समुषद्भिरजायथाः ॥१८

हे 'केतो'! ध्वजरूप! त्वं 'समजायथाः' सञ्जातो भव। कैर्जन्यमानः? 'उषद्भिः' वसद्भिः गृहस्थैरित्यर्थः। किं कुर्वन्? 'मर्याः' मर्त्येभ्यः 'केतु' ज्ञानं 'कृण्वन्' कुर्वन्। न केवलं ज्ञानम्, अपि तु 'पेशः' कुर्वन्, पेशःशब्देन सुवर्णं सौन्दर्यं वा अभिधीयते, तथा च शारीरब्राह्मणम्—"पेशस्कारी पेशसो मात्रामुपादाय[1]" इत्यादि। किम्भूतेभ्यो मनुष्येभ्यः? 'अकेतवे' अज्ञानेभ्यः, तथा 'अपेशसे' निर्धनेभ्यः कुरूपेभ्यो वा। केतुम् इति "कित ज्ञाने" इत्यस्य रूपम्। अपेशसे इति व्यत्ययेन बहुवचनस्यैकवचनम्। मर्याः इति "निष्टर्क्या"दि-(पा० ३,१,१२३)सूत्रेण निपातितः, व्यत्ययेन चतुर्थ्याः स्थाने प्रथमा। उषद्भिः इति व्यत्ययेन सम्प्रसारणम्। समजायथाः इति व्यवहितोपसर्गसम्बन्धः ॥१८

देव सवितः·········॥१९

इत्यादि पूर्वं (१,१६) व्याख्यातम्। १९

अदिते अन्वमंस्थाः ॥२०

---

1 मै—०मुपादय।

**अनुमते अन्वमंस्था: ॥२१**

**सरस्वत्यन्वमंस्था ॥२२**

अभ्यर्थिता अदित्यादय: पूर्वम् ; सम्प्रति तदेवानूद्यते। हे 'अदिते'! त्वं यस्मात् 'अन्वमंस्था:' तस्मात् मम इदं कर्म साङ्गफलदायि भवतु इति। तथा हे 'अनुमते'! हे 'सरस्वति!' २०—२२

**अक्तं रिहाणा व्यन्तु वय: ॥२३**

यजुरिदं दर्भतृणाभ्यञ्जने विनियुक्तम्। वयो देवता। हे 'वय:'! पक्षिण:! इदं दर्भतृणम् 'अक्तं' घृतेन अभ्यक्तं[1] 'रिहाणा:' आस्वादयन्त: 'व्यन्तु' खादन्तु[2]। रिहाणा: इति "लिह आस्वादने" वर्णव्यत्ययेन लकारस्य रेफ:[3]। व्यन्तु इति "वी गतिप्रजनकान्त्यसनखादनेषु" लोट्, झि:, "बहुलं छन्दसि" (पा० २,४,७३) इति शपो लुक् ॥ २३

**य: पशूनामधिपती रुद्रस्तन्तिचरो वृषा।**

**पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव ॥२४**

अनुष्टुबियं रुद्रदेवता दर्भजूटिकाहोमे विनियुक्ता। 'य:' 'पशूनां' गवादीनाम् 'अधिपति:' स्वामी, 'रुद्र:' परेषां रोदयिता, 'तन्तिचर:' अन्तरीक्षस्थानग:, 'वृषा' वर्षयिता पर्जन्यरूप:। अधुना स एव प्रत्यक्षीकृत्य[4] उच्यते—हे रुद्र! स त्वं 'पशून्' गवाश्वादीन् 'अस्माकं' सम्बन्धिनो 'मा हिंसी:'। 'एतत्' 'हुतं' 'तव' 'अस्तु', प्रीतये इति शेष: ॥ २४

1 आ—घृतेन प्रक्तम् उचितम्।

2 घा—तृप्यन्तु।

3 मे—लिहर्व्यत्ययेन लस्य रेफ:।

4 घा—परोक्षेऽपि भगवान् प्रत्यक्षीकृत:।

पूर्णाहोमं यशसे जुहोमि
योऽस्मै जुहोति वरमस्मै ददाति ।
वरं वृणे यशसा भामि लोके ॥ २५

विराड़ियमैन्द्री यशस्कामस्य यजनीयप्रयोगे विनियुक्ता[1] । 'पूर्णाहोमं' पूर्णस्रुवेण अग्नौ हव्यत्यागम् अहं होता 'जुहोमि' निष्पादयामि । किमर्थम् ? 'यशसे' कीर्त्यर्थम् । मन्त्रेणैवास्य स्तुतिमाह[2]— 'यः' कश्चित् 'अस्मै' 'यशसे' 'जुहोति', 'वरम्' अभिमतफलम् 'अस्मै' होत्रे[2] यशः कर्तृ ददाति । यस्मादेवम्, अतः अहं 'वरं' 'वृणे' अहं प्रार्थये । हे यशः ! त्वया 'यशसा' अहं 'लोके' 'भामि' तेजस्वी भवामि इत्यर्थः[3] ॥ २५

कया न श्चित्र······॥२६

इत्युक्तार्थो[5] ग्रहहोमे (२, १७) ॥ २६

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढ़ा चिदारुजे वसु ॥ २७
अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतये ॥ २८

---

1. आ—विराड़स्य छन्दः, यशस्कामस्य यजनीयप्रयोगे विनियोगः, इन्द्रो देवता ।
2. आ—यशोहोमस्य मन्त्रम् ऋचा अग्नेः स्तुतिमाह ।
3. आ—'होमस्य कर्त्रे' इत्यधिकम् ।
4. आ—यशसा कीर्त्या इहलोके अहं भामि, भा दीप्तौ दीप्त्या तेजस्वी भवामीति यावत् ।
5. मै—इत्युक्तार्थम् ।

स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥ २८

गायत्रस्त्रिस्रः[1] [त्रिष्टुबेका] इन्द्रदेवताकाः शान्तिकर्मणि विनियुक्ताः महावामदेवदृष्टाः। हे 'इन्द्र' ! 'कः' रसः 'त्वा' त्वां 'मत्सत्' मत्तं करोति। कस्य रसः ? 'अन्धसः' अन्नस्य सोमस्य इति यावत्। किम्भूतो रसः ? 'सत्यः' सोमयागे क्रियमाणे अवश्यम्भावी। पुनः किम्भूतः ? 'मदानां' सुरादीनां मध्ये 'मंहिष्ठः' अतिशयेन मदजनकः। येन मदेन मत्तः त्वं 'वसु' वसूनि धनानि 'आरुजे' भञ्जयसि। किम्भूतानि धनानि ? 'दृढ़ा चित्' दृढ़ान्यपि सुवर्णप्रभृतीनि धनानि यागकर्तृभ्यो दातुं भञ्जयसि। त्वया कथिते वयं तत् अनुतिष्ठामः। मंहिष्ठः इति "महि वृद्धौ" तृजन्तात् "तुश्छन्दसि" (पा० ५,३,५९) इति इष्ठन् "तुरिष्ठेमेयःसु" (पा० ६,४,१५४) इति तृचो लोपः। मत्सत् इति "मदी हर्षे" ण्यन्तात् लेट्, तिप्, "सिब्बहुलं लेटि" (पा० ३,१,३४) इति सिप्, णिलोपः। दृढ़ा इति "शेश्छन्दसि बहुलम्" (पा०६,१,७०) इति शसः शेर्लोपः। आरुजे इति 'तिङां तिङो भवन्ति' इति सिप्-स्थाने उत्तमैकवचनमिट्। वसु इति "सुपां सुलुक्"—(पा० ७,१,३९) इति शसो लुक्॥ २७

हे इन्द्र ! 'नः' अस्माकं, तथा 'सखीनां' मित्राणां, तथा 'जरितृणाम्, 'अविता' पालयिता 'भवसि' भव। 'अभी' 'आभिमुख्येन', तथा 'सु' सुष्ठु यथा स्यात्। किम्भूतः सन् ? 'शतं' स्वयं शतधा भूत्वा इत्यर्थः। किमर्थम् अविता भव ? 'ऊतये' बहुप्रकाररक्षणाय।

[1] भ—मे—गायत्रास्त्रिस्रः

'अभा षु णः' इति "इकः सुञि" (पा० ६,३,१३४) इति दीर्घः, "सुञः" (पा० ८,३,१०७) इति षत्वं, "नश्च धातुस्थोरुषुभ्यः" (पा० ८,४,२७) इति णत्वम्। जरितॄणाम् इति धातूनामनेकार्थत्वात् जीर्यतेः स्तुतिरर्थः। भवामि इति लेट आट्॥ २८

'नः' अस्मभ्यम् 'इन्द्रः' 'स्वस्ति' शान्तिं 'दधातु'। किम्भूतः? 'वृद्धश्रवाः' वृद्धवाक्यकारी। तथा 'पूषा', 'विश्ववेदाः' सर्वज्ञः, तथा 'तार्क्ष्यः', 'अरिष्टनेमिः' अव्याहतगतिप्रसरः, तथा 'बृहस्पतिः'। स्वस्ति नः दधातु। "एतासामेतस्मो गातव्या वा" इति गृह्यम्॥ २९

इति छान्दोग्यमन्त्रभाष्ये द्वितीयं खण्डम्।

---

**काम वेद ते नाम मदो नामासि**
**समानयामुं सुरा ते अभवत्।**
**परमत्र जन्माग्ने तपसो निर्मितोऽसि स्वाहा॥ १**

प्रस्तारपङ्क्तिरस्य छन्दः, कामो देवता, ज्ञातिकर्मणि पानीयप्लावने[1] विनियोगः। "सुरोत्तमेन पानीयेन त्रिर्मूर्धन्यभिषिञ्चेत् तस्मात् सुरोत्तमा ह्यापोऽद्भिरेवाभिषिचयेत्" इति गृह्यसूत्रम्। हे 'काम'! 'वेद' जानामि 'ते' तव 'नाम'। किं पुनस्तत्? 'मदो नामासि', मदनामा त्वं भवसि, मदहेतुत्वात्। यतः ईदृशः त्वम् अतः 'समानय' सम्यगानय प्रापय अमुम् अमुकनाम्नीं कन्यां पतिं परिणेतारम्। किञ्च 'सुरा' 'ते अभवत्', ते इति चतुर्थ्यन्तमेतत्, त्वदुत्पत्त्यर्थं [ कन्येयं ] सुरा भूता इत्यर्थः, सुरया हि काम उत्पद्यते। तथा चोक्तम्—"रस एष मदनस्य यत् सुरा[2]" इति 'परम् अत्र जन्म

---

1 क—आनप्लावने। 2 मि—य—रसु एष मदनस्य यत् सुरा।

अग्ने' अस्यां कन्यायां हे अग्ने! तव परं जन्म; कन्या हि कामस्योत्कृष्टमुत्पत्तिस्थानम्। अग्निपूर्वकमिव कामपूर्वकं सर्वं कर्म प्रवर्तते, इत्यतः काम एव सम्बोध्यते अग्ने इति। किञ्च 'तपसो निर्मितोऽसि' स्त्रैणात् तपसः पुरुषप्रसादनार्थं निर्मितः सृष्टः असि प्रजापतिना इति शेषः। य इत्थम्भूतः त्वं तस्मै 'स्वाहा', स्वाहा हविरभिधानम्, एतदाज्याख्यं हविः तुभ्यं ददामीत्यर्थः। एवं सर्वत्र स्वाहाकारेषु योज्यम्॥ १

इमन्त उपस्थं मधुना संसृजामि
प्रजापतेर्मुखमेतद् द्वितीयम्।
तेन पुंसोऽभि भवासि सर्वान्
अवशान्[1] वशिन्यसि राज्ञी स्वाहा॥ २

मध्येज्योतिरियं जगती। उपस्थरूपः कामोदेवता; उपस्थप्लावने स्नातीनां विनियोगः। हे कन्यके! 'इमं' 'ते' तव 'उपस्थम्' आनन्देन्द्रियं 'मधुना' मद्येन 'संसृजामि' संयोजयामि। यतः 'प्रजापतेर्मुखमेतत् द्वितीयम्', द्विमुखो हि प्रजापतिः, एकं मुखं ब्रह्मग्रहणार्थम्, अपरं प्रजोत्पादनार्थम्। "मुखतो हि प्रजा असृजत्" इति श्रुतेः। यतः 'तेन' 'सर्वान्' 'अवशान्'[1] अपि 'पुंसः' 'अभिभवासि' वशी करोषि। 'वशिनी' कान्तिमती 'राज्ञी' स्वामिनी सर्वकामानाम् 'असि', तेनैव हेतुभूतेन। अभिभवासि इति "लेट् लेटोऽडाटौ" (पा० ३,४,९४) इत्याट्। वशिनी इति "वश कान्तौ"॥ २

अग्निं क्रव्यादमकृण्वन् गुहानाः
स्त्रीणामुपस्थमृषयः पुराणाः।

1 मै—वशान्।

**तेनाज्यमकृण्वं स्त्रैशृङ्गं**
**त्वाष्ट्रं त्वयि तद्दधातु स्वाहा ॥ ३**

उपरिष्टाज्ज्योतिरियं त्रिष्टुप्। उपस्थरूपः कामोदेवता ; पूर्ववद्विनियोगः। 'अग्निं' 'क्रव्यादं' क्रव्यभक्षं मांसाग्निम् 'अकृण्वन्' कृतवन्तः। के ? 'ऋषयः' वसिष्ठाद्याः। कीदृशाः ? [1]'गुह्याना:' उपगूहमानाः,[2] 'पुराणाः' आद्याः। कासाम् ? 'स्त्रीणाम्'। किम् ? 'उपस्थेन्द्रियम्'। 'तेन' 'आज्यं' शुक्रम् 'अकृण्वन्' कृतवन्तः। त्रिशृङ्गस्य इदं 'त्रैशृङ्गम्', त्वष्टुरिदं 'त्वाष्ट्रम्'। हे कन्ये ! 'त्वयि' 'तत्' रेतः 'दधातु' स्थापयतु। त्रिशृङ्गा ऋषभः मन्त्रवर्णात्। "त्वष्टा वै रेतः सिक्तं[3] विकरोति" इति। याजिनां तत्कर्मणि योगात् रेत आज्यं स्याद् गर्भोत्पत्तिरिति ॥ ३

**अर्हणा पुत्रवाससा धेनुरभवद् य मे[4]।**
**सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥४**

अनुष्टुबियम्। अर्हणीया गौर्देवता ; गोरूपस्थापने विनियोगः[5]। 'या' इयम् 'अर्हणा' पूजासम्पादिनी[6] 'पुत्रवाससा' पुत्रवासानुगामिनी[7] 'मे' मम 'धेनुः' 'अभवत्' 'सा' 'नः' अस्माकं मनोरथान् 'दुहाम्' पूरयतु। 'उत्तराम् उत्तरां समाम्' उत्तरोत्तरमब्दं पूरयतु। य इति "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" (पा० ६,३,६३) इति ह्रस्वः। दुहाम्

1 G—उपस्थम् इत्यधिकम्। 2 G—आच्छादयन्तः इत्यधिकम्।

3 आ—त्वष्टरि रेतः सिक्तः। य—त्वष्टा वै रेतः।

4 सायणादिभिः 'यमे' इत्येकपदतया पठ्यते।

5 आ—अस्य वसिष्ठ ऋषिः, छन्दोऽनुष्टुप्, अर्हणीया गौर्देवता, धेनुबन्धने विनियोगः।

6 मै—प्रजासम्पादिनी।

7 आ—पुत्रानुगामिनी।

इति दृष्टतां "लोपस्त आत्मनेपदेषु" (पा० ७,१,४१) इति तकारलोपः। पुत्रवाससा इति पुत्रवासं पुत्राश्रयं सादति गच्छतीति षद्लृ-धातोर्गत्यर्थात् "अन्येष्वपि[1] दृश्यते" (पा० ३,२,१०१) इति डः, टिलोपः॥ ४

## इदमहमिमां पद्यां विराजमन्नाद्यायाधि तिष्ठामि ॥५

यजुरिदं विराड्देवतम् उपविशदर्हणीयजपे विनियुक्तम्। 'इदम्' आसनम् 'इमां' च 'पद्यां' पादपदवीं[2] 'विराजं' विराजमानाम्[3] 'अधितिष्ठामि' आक्रामामि। किमर्थम्? 'अन्नाद्याय' अन्नाद्यार्थम्। विराजमिति क्विबन्तमेतत्। अन्नाद्याय इति आदौ भवम् आद्यम् अन्नञ्च तत् आद्यञ्चेति अन्नाद्यं तस्मै[4]॥ ५

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः।
ता मह्यमस्मिन्नासने अच्छिद्राः शर्म यच्छत॥ ६
या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु।
ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म यच्छत॥ ७

अनुष्टुबस्य मन्त्रद्वयस्य छन्दः, विष्टरस्यासनस्य पादयोरधस्ताद्दाने विनियोगः, ओषध्यो देवताः[5]। हे 'ओषधीः'! ओषध्यः! फलपाकान्ताः! 'याः' यूयं 'सोमराज्ञीः' सोमः चन्द्रमाः राजा अधिपतिः यासां ताः सोमराज्ञाः, 'बह्वीः' बहुप्रकाराः, 'शतविचक्षणाः' बहुशः प्रजाजीवने निपुणाः, विशेषेणाख्यायते कथ्यते अनेन विचक्षणं मुखम्,

---

1 मै—अन्येभ्योऽपि।

2 मै—पादबह्वीम्। 3 मा—विविधशोभनाम्।

4 'किमर्थम्' इत्यादिः 'तस्मै' इत्यन्तो भाष्यांशो मै—पुस्तके नास्ति।

5 मै—यजुरिदमोषधिदैवताकमासनदाने विनियुक्तम्।

शतं विचक्षणं यासां ताः[1] शतविचक्षणाः शतमुख्यः, 'ताः' यूयं 'अस्मिन् आसने' उपवेशने[2] 'मह्यं'[3] 'शर्म' सुखं 'यच्छत' दत्त। किम्भूताः ? 'अच्छिद्राः'। निरन्तराः। ओषधीरित्यादिषु "वा छन्दसि" (पा० ६,१, १०६) इति पूर्वसवर्णः।[4] शतविचक्षणा इति "बहुलं संज्ञाच्छन्दसोः" (वा०—पा० २,४,५५) ल्युटि ख्याञादेशाभावः। यच्छत इति प्रार्थनायां लोण्मध्यमपुरुषस्य बहुवचनम्॥ ६

'याः' 'ओषधीः' 'पृथिवीम् अनु' पृथिव्यां 'विष्ठिताः' विशेषेण स्थिताः, 'ताः' 'अस्मिन्' द्वितीयविष्टरे 'पादयोः' अधस्तान्निहिते मह्यं शर्म यच्छत इति सम्बन्धः। शेषं पूर्ववत्॥ ७

**यतो देवीः प्रतिपश्याम्यापस्ततो मा ऋद्धि[5]रा गच्छतु॥ ८**

विराडस्य छन्दः, पादप्रक्षालनोदकवीक्षणे विनियोगः, आपो देवताः[6]। हे 'आपः'! हृष्टयः! 'यतः' यस्मात् सूर्यात् 'देवीः' देवनादिगुणयुक्ताः युष्मान् अहं 'प्रतिपश्यामि' "आदित्याज्जायते वृष्टिः" इति स्मृतेः। 'ततः' तस्मात् सूर्यात् 'मा' माम् 'ऋद्धिः' 'आगच्छतु'॥ ८

**सव्यं पादमव नेनिजेऽस्मिन् राष्ट्रे श्रियन्दधे॥ ९**

**दक्षिणं पादमव नेनिजेऽस्मिन् राष्ट्रे श्रियमावेशयामि॥ १०**

1 'विशेषेण' इत्यादिः 'ता' इत्यन्तो भाष्यभागो मै—पुस्तके नास्ति।

2 मै—पुस्तके व्याख्यानपदमिदं न दृश्यते।

3 मै—पुस्तके 'मह्यम्' इति पदम् 'अस्मिन् आसने' इत्यतः प्राक् पठ्यते।

4 इतोऽग्रे 'बहुवचनम्' इत्यन्तो भाष्यभागो मै—पुस्तके न पठ्यते।

5 मुद्रापितेष्वाकरग्रन्थेषु राद्धिरिति पाठः।

6 मै—विराडियं प्रेक्षणे विनियुक्ता अब्दैवता।

विराड्गायत्र्यस्य मन्त्रद्वयस्य छन्दः, सव्यदक्षिणोभयपादप्रक्षालने विनियोगः, श्रीर्देवता। सव्यपादप्रक्षालनार्थमिदमाह[1]—अहं 'सव्यं' वामं 'पादम्' 'अवनेनिजे' प्रक्षालयामि। 'अस्मिन्' 'राष्ट्रे' विषये 'श्रियं' 'दधे' अर्पयामि ॥ ९

'आवेशयामि' प्रवेशयामि आदधामि। शेषं पूर्ववत् ॥ १०

## पूर्वमन्यमपरमन्यमुभौ पादाववनेनिजे राष्ट्रस्यर्द्ध्या अभयस्यावरुद्ध्यै ॥ ११

यजुरिदम्। 'पूर्वम् अन्यं' सव्यम्, 'अपरम् अन्यं' दक्षिणम्, एतौ 'उभौ पादौ' 'अवनेनिजे' प्रक्षालयामि। 'राष्ट्रस्य' 'ऋद्ध्यै' वृद्ध्यर्थम्, 'अभयस्य' 'अवरुद्ध्यै' परिग्रहाय ॥ ११

## अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम् ॥ १२

यजुरिदम् अर्घ्यगोयस्यार्घ्यप्रतिग्रहणे विनियुक्तम् अर्घ्यदेवताकम्[2]। हे अर्घ्य! 'अन्नस्य' त्वं[3] 'राष्ट्रिः' दीप्तिः 'असि' भवसि, अहमपि 'ते' तव प्रसादात् 'राष्ट्रिः' दीप्तिः 'भूयासम्' भवामि। राष्ट्रिः इति "राजृ दीप्तौ" औणादिकः त्रिप् बाहुलकात्[4] ॥ १२

## यशोऽसि यशो मयि धेहि ॥ १३

यजुरिदम् आचमनीयदैवतम् आचमने विनियुक्तम्। हे आचमनीय! यतः त्वं 'यशः असि' कीर्तिरूपं भवसि ततः 'मयि यशः धेहि'

---

1 'विराड्गायत्रीयं श्रीदेवता पादप्रक्षालने विनियुक्ता' इत्येतावन्मात्रं भूमिका मै—पुस्तके पठ्यते।

2 मै—यजुरिदमर्घदेवतं प्रतिग्रहणे विनियुक्तम्।

3 'त्वम्' इति पदं मे—पुस्तके 'राष्ट्रिः' इत्यस्याग्रे पठ्यते।

4 राष्ट्रिरित्यादि पदसाधनमिदं मै—पुस्तके न दृश्यते। भा—क्विन्, बाहुलकात् रेफः। य—क्विः, बाहुलकात् न लप्।

मां यशस्विनं कुरु इत्यर्थः। यशोहेतुत्वात् यशोऽसीति अभेदोपचारः[1] ॥ १३

**यशसो यशोऽसि ॥ १४**

यजुरिदं मधुपर्कदैवतं मधुपर्कग्रहणे विनियुक्तम्। हे मधुपर्क! यतः[2] त्वं 'यशः असि' कीर्तिरिव मधुरोऽसि; ततः[3] त्वद्योगात्[4] अहमपि 'यशसः' कीर्तिमान् सञ्जातः। यशसः इति मत्वर्थे "अर्शआदिभ्यो ऽच्" (पा० ५,२,१२७) ॥ १४

**यशसो भक्षोऽसि महसो भक्षोऽसि श्रीर्भक्षो[5]ऽसि श्रियं मयि धेहि ॥ १५**

यजुरिदं मधुपर्कदैवतं मधुपर्कप्राशने विनियुक्तम्। हे मधुपर्क! यतस्त्वं 'यशसः' यशसे यशस्विनां कीर्तिमतां 'भक्षः' 'असि' भवसि। तथा 'महसे' तेजसे महस्विनां 'भक्षोऽसि'। तथा श्रीमतां त्वं 'श्रीः' श्रियै 'भक्षोऽसि'। तद्भक्षणेन कीर्तिस्तेजो लक्ष्मीश्च भवति। अतः 'श्रियं मयि धेहि' श्रीमन्तं मां कुरु इत्यर्थः। यशसः महसः इति "चतुर्थ्यर्थे बहुलं छन्दसि" (पा० २,३,६२) इति षष्ठी। श्रीः इति "सुपां सुलुक्"—(पा० ७,१,३९) इति चतुर्थ्येकवचनस्य सुः ॥ १५

**मुञ्च गां वरुण पाशाद्**
**द्विषन्तं मेऽभि धेहि।**
**तं जह्यमुष्य चोभयोरुत्सृज**
**गामत्तु तृणानि पिबतूदकम् ॥ १६**

---

1 अन्तिमं वाक्यमिदं मै—पुस्तके नास्ति।

2 क—यथा।

3 क—भ—मै—तथा।

4 भ—मै—तद्योगात्।

5 आ—प—भ—य—पुस्तकेषु मन्त्रेऽस्मिन् सर्वत्र 'भक्ष्यः' इति पाठो दृश्यते।

त्रिष्टुतोऽयं गोदैवता गोमोचने विनियुक्ता। अर्हणीयकर्मसमाप्तौ अर्हणीय आह—एतां 'गाम्' अर्हणीयां 'वरुण' 'पाशात्' बन्धनात् 'मुञ्च' मोचय। मोचयित्वा 'उत्सृज' विसर्जय। सेयं 'तृणानि' 'अत्तु' भक्षयतु, 'उदकं पिबतु'। एवं मोचिता उत्सृष्टा च प्रार्थ्यते[1] हे अर्हणीये ! 'मे' मम अर्हणीयस्य 'अमुष्य' च अर्चयितुः 'उभयोः' 'द्विषन्तं' द्वेष्टारम् 'अभिधेहि' बधान[2] तथा 'जहि' विनाशय ॥ १६

माता रुद्राणां दुहिता वसूनां
स्वसादित्यानाममृतस्य नाभिः।
प्र णु वोचं चिकितुषे जनाय
मा गामनागामदितिं वधिष्ट ॥ १७

त्रिष्टुबियं गोदैवता अनुमन्त्रणे विनियुक्ता[3] ! येयम् अर्हणार्थम् आलम्भार्थम् अर्हणीया गौरानीता सेयं 'रुद्राणां' 'माता', 'वसूनां' 'दुहिता', 'आदित्यानां' 'स्वसा' भगिनी, 'अमृतस्य' दधिदुग्धादेः 'नाभिः' कारणम्। अत एव एतां 'गाम्' 'अनागाम्' अनपराधाम्, 'अदितिम्' अदीनाम्, हे यजमानपरिचारकाः ! यूयं 'मा वधिष्ट' मा प्राणैर्वियोजयत। अहमेवं 'नु' भोः 'जनाय' अस्मै यजमानाय 'प्रवोचम्' प्रोक्तवान् अस्मि—गोवधं मा कुरु त्वमिति। किम्भूताय ? 'चिकितुषे' ध्यानसम्पन्नाय। प्रणुवोचम् इति व्यवहितोपसर्गसम्बन्धः, "बहुलं छन्दस्यमाङ्योगेऽपि" (पा० ६,४,७५) इत्यड़ागमप्रतिषेधः। व्यत्ययेन नु-शब्दस्य णत्वम्। चिकितुषे इति "कित ज्ञाने" इत्यस्मात्

---

1 से—एवं मोचिता त्वम्। क—भ—ग—एवं मोचिता त्वम्।

2 भा—अभिभव।

3 भा—त्रिष्टुबस्य च्छन्दः गवानुमन्त्रणे विनियोगः, गौर्देवता।

ङसो चतुर्थ्येकवचनम्। अनागाम् इति सलोपश्छान्दसः। अदितिम् इति "दो अवखण्डने" इत्यस्मात् क्तिन्॥ १७

या अकृन्तन्नवयन् या अतन्वत
याश्च देव्यो अन्तानभितोऽततन्थ।
तास्त्वा देव्यो जरसा संव्यय-
न्त्वायुष्मतीदं परिधत्स्व वासः॥ १८

जगतीयं परिधापने विनियुक्ता परिधापयितॄणो देवताः[1]। 'याः' स्त्रियः इदं वस्त्रं परिधीयमानम् 'अकृन्तन्' कर्तितवत्यः, याः 'अवयन्' उतवत्यः, 'याः' 'अतन्वत' विस्तारितवत्यः, 'देव्यो' दानादिगुणयुक्ताः 'याश्च' 'अन्तान्' पटसम्बन्धिनः 'अभितः' उभयपार्श्वे 'अततन्थ' ग्रथितवत्यः। 'ताः' देव्यः हे कन्ये! 'त्वा' त्वां 'जरसा' जरान्तं यावत् 'संव्ययन्तु' परिधापयन्तु। हे 'आयुष्मति'! 'इदं' 'वासः' 'परिधत्स्व' अन्तरीयं कुरु। अततन्थ इति व्यत्ययेन झेस्थ॥ १८

परिधत्त धत्त वाससैनां
शतायुषीं कृणुत दीर्घमायुः।
शतञ्च जीव शरदः सुवर्चा
वसूनि चार्यो विभजासि जीवन्॥ १९

त्रिष्टुबियं परिधापयितृदेवता परिधापने विनियुक्ता। हे उपाध्यायादयः! यूयं 'एनां' कन्यां 'परिधत्त' परिधापयत। तथा 'वाससा' एनां 'धत्त' धारयत वस्त्रावृतां कुरुत। 'शतायुषीं' चिरकालजीविनीं 'कृणुत'। 'दीर्घम् आयुः' बहुकालं यावत् आयुः कुरुत[2]। एवं

---

1 मे—परिधापयित्री देवताः।

2 'आयुः कुरुत' इत्यंशो मे—पुस्तके न पठ्यते।

परिधापकान् अभिधाय अधुना तामेवाह—हे कन्यके ! 'शतञ्च जीव शरदः' शतं वर्षाणि जीव। किञ्च 'सुवर्चा'[1] सुकान्तिमती असि। 'आर्ये !'[2] 'वसूनि' धनानि 'विभृजासि'। 'जीवन्' जीवन्ती। शतायुषीम् इति गौरादित्वात् ङीष्। विभृजासि इति "भज सेवायाम्" व्यत्ययेनाकारस्य ऋकारः, लेटि शपि श्लौ अभ्यासस्य "बहुलं छन्दसि" ( पा० ७,४,७८ ) इति इत्वे आडागमे च रूपम्। जीवन् इति लिङ्गव्यत्ययः ॥ १९

**सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये।**
**रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ २०**

अनुष्टुबियं सोमदेवता पत्युः कन्यानयनजपे विनियुक्ता। 'इमां' जातमात्रामेव 'सोमः' 'गन्धर्वाय' आदित्याय 'अददत्' दत्तवान्। सोऽपि 'अग्नये'। अग्निरपि धनपुत्रसहितामिमां मह्यं दत्तवान्। 'अथो' इति अपिशब्दार्थे। अददत् इति "दद दाने" परस्मैपदं छन्दसि दृश्यते[3] ॥ २०

**प्र मे पति या नः पन्थाः कल्पताम्।**
**शिवा अरिष्टा पतिलोकं गमेयम् ॥ २१**

द्विपाज्जगतीयं पतिदेवताका कटपादप्रवर्तने विनियुक्ता। 'नः' अस्माकं 'पति' पतिः 'मे' मदर्थं 'पन्थाः' पन्थानं 'प्रकल्पतां' प्रकरोतु, 'या' येन पथा अहं 'शिवा' सुखावहा 'अरिष्टा' अहिंसिता 'पतिलोकं' पतिकुलं 'गमेयं' गच्छामि। पति इति "सुपां सुलुक्" ( पा० ७,१, ३९ ) इति लुक्। या इति "सुपां सुलुक्" ( पा० ७,१,३९ ) इति

---

1 क—सुतेजस्का इत्यधिकम्। मै—सुकान्तिमती इति न्यूनम्।

2 क—श्रेष्ठे इति व्याख्यानपदमधिकम्।

3 अन्तिमं वाक्यमिदं भ-मै-य-पुस्तकेषु न दृश्यते।

सूत्रेण तृतीयैकवचनस्य डादेशः। पन्था इति अमः स्थाने सुः। गमेयम् इति "लिङ्याशिष्यङ्" ( पा० ३,१,८६ )। प्रकल्पताम् इति व्यवहितोपसर्गसम्बन्धः॥ २१

प्रास्याः पति या नः पन्थाः कल्पताम्।
शिवा अरिष्टा पतिलोकं गम्याः॥ २२

स्वयं जपे अजपन्त्यां प्रास्याः इत्यूहं कृत्वा अर्थस्तु पूर्ववत्॥ २२

अग्निरेतु प्रथमो देवताभ्यः
सोऽस्यै प्रजां मुञ्चातु मृत्युपाशात्।
तदयं राजा वरुणोऽनुमन्यतां
यथेयं स्त्री पौत्रमघं न रोदात्॥ २३

जगतीयम् अग्निदेवताका आज्यहोमे विनियुक्ता। अस्मिन् कर्मणि 'अग्निः' 'एतु' आगच्छतु। किम्भूतः? 'प्रथमः' प्रधानभूतः। कुतः? 'देवताभ्यः' इन्द्रादिभ्यः। आगत्य च 'सः' अग्निः 'अस्यै' अस्याः कन्यायाः 'प्रजां' भाविनीं 'मुञ्चातु' मोचयतु 'मृत्युपाशात्'। 'तत्' एतदग्निकृतमृत्युपाशविमोचनम् 'अयं राजा वरुणः अनुमन्यताम्' अनुजानातु। तथा च करोतु 'यथा इयं स्त्री' 'पौत्रम् अघम्' पुत्रसम्बन्धि व्यसनं 'न रोदात्' न रुद्यात्। अस्यै इति "षष्ठ्यर्थे चतुर्थी वाच्यम्[1]" (वा—पा० २,३,६२) इति षष्ठ्यर्थे चतुर्थी। मुञ्चातु इति व्यत्ययेन दीर्घत्वम्। रोदात् इति लिङर्थे लेट आट्॥ २३

इमामग्निस्त्रायतां गार्हपत्यः
प्रजामस्यै जरदष्टिं कृणोतु।

---

1 भ-मे—वक्तव्या।

अशून्योपस्था जीवतामस्तु माता
पौत्रमानन्दमभि वि बुध्यतामियम् ॥ २४

अतिजगतीयम् अग्निर्देवता आज्यहोमे विनियुक्ता। पतिरग्नौ प्रार्थयते—'इमां' कन्याम् 'अग्निः' गार्हपत्याख्यः अग्निहोत्रिणीं सतीं 'त्रायतां' पालयतु। किञ्च 'प्रजाम्' 'अस्यै' अस्याः 'जरदष्टिं' जराव्यापिनीं स एवाग्निः 'कृणोतु' करोतु। किञ्च 'अशून्योपस्था' नित्यं भर्तुः सङ्गता 'अस्तु'। तथा 'जीवताम्' आयुष्मतां 'माता अस्तु' अस्यां जातानि अपत्यानि अकाले मा म्रियन्ताम् इति आशास्यते। अतः 'इयं' 'पौत्रं' पुत्रसम्बन्धिनम् 'आनन्दम्' 'अभिविबुध्यताम्' आभिमुख्येन विविधम् अनुभवतु॥ २४

द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च।
स्तनन्धयस्ते पुत्रान् सविताऽभिरक्षत्वा वाससः
परिधानाद् बृहस्पतिर्विश्वे देवा अभि रक्षन्तु पश्चात्
॥ २५

शक्वरीयं वैश्वदेवी। हे कन्ये! 'ते' तव 'पृष्ठं' पश्चाद्भागं 'द्यौः' द्युलोको 'रक्षतु'। 'वायुः' 'अश्विनौ च' तव 'ऊरू' रक्षन्तु। किञ्च 'स्तनन्धयः' स्तनाहारान् 'ते' तव 'पुत्रान्' 'सविता' आदित्यः 'अभिरक्षतु'। 'आ वाससः' 'परिधानात्' वासः परिधानयोग्याया दशायाः प्रागित्यर्थः, तस्माच्च कालात् 'पश्चात्' 'बृहस्पतिः' 'विश्वे देवाः' च 'अभिरक्षन्तु'। स्तनन्धयः इति शसः सुः॥ २५

मा ते गृहेषु निशि घोष उत्था-
दन्यत्र त्वद्रुदत्यः संविशन्तु।

मा त्वं रुदत्युर आ वधिष्ठा
जीवपत्नी पतिलोके विराज
पश्यन्ती प्रजां सुमनस्यमानाम् ॥ २६

अतिजगतीयम्। अग्न्यादयो देवताः। हे कन्यके! 'ते' तव 'गृहेषु' 'निशि' रात्रौ 'घोषः' आक्रन्दरूपः शब्दः 'मा उत्थात्' मा उत्तिष्ठतु। किञ्च 'तत् अन्यत्र' त्वां त्यक्त्वा 'रुदत्यः' स्त्रियः 'संविशन्तु' स्वपन्तु। किञ्च 'रुदती' सती 'त्वम्' 'उरः' हृदयं 'मा आवधिष्ठाः' मा त्वम् उरोघातं रोदिष्यसि इत्यर्थः। तथा 'जीवपत्नी' जीवत्पतिका सती त्वं 'पतिलोके' पतिकुले 'विराज' शोभस्व। किम्भूता? 'सुमनस्यमानां' हृष्टचित्तां 'प्रजां' 'पश्यन्ती' वीक्षमाणा ॥ २६

अप्रजस्यं पौत्रमर्त्यं पाप्मानमुत वा अघम्।
शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रति मुञ्चामि पाशम्
॥ २७

उपरिष्टाद्बृहतीयम्। हे कन्यके! 'अप्रजस्यं' त्वदीयं वन्ध्यात्वं, 'पौत्रमर्त्यं' पुत्रसम्बन्धिमरणम्, 'पाप्मानं' त्वदीयमपि मरणम्, 'उत वै' अथवा 'अघं' त्वदीयमनिष्टम् एतत् सर्वं त्वत्तोऽपकृष्य 'शीर्ष्णः' मूर्ध्नः 'स्रजम् इव उन्मुच्य' मालामिव अवतार्य 'द्विषद्भ्यः' 'प्रतिमुञ्चामि'। 'पाशम्' मृत्युपाशरूपमेतदित्यर्थः।[1] ॥ २७

परैतु मृत्युरमृतं म आगाद्
वैवस्वतो नो अभयं कृणोतु।

---

1 क—पाशं मृत्युपाशरूपं प्रतिमुञ्चामि ददामीत्यर्थः। ख—पाशरूपं मृत्युपाशमिव प्रतिमुञ्चामि क्षिपामि।

परं मृत्यो अनु परेहि पन्थां
यत्र नो अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि
मा नः प्रजां रीरिषो मोत वीरान् ॥२८

अत्युष्णिगियं वैवस्वतदेवता। कन्यका आशास्ते—मत्तः[1] 'परैतु मृत्युः' पराङ्मुखो भवतु नाहं म्रियेय इत्यर्थः। तथा 'अमृतम्' अमरणं 'मे' मम 'आगात्' आगच्छतु। तथा 'वैवस्वतो' यमः 'नः' अस्माकम् 'अभयं' 'कृणोतु' करोतु। इदानीं प्रत्यक्षीकृत्य मृत्युरेवाभ्यर्थ्यते—हे 'मृत्यो'! यमः! मत्तः 'परम्' अन्यं 'पन्थां' पन्थानम् 'अनुपरेहि' अनुगच्छ मत्तः पराङ्मुखो गच्छ इत्यर्थः। 'यत्र' 'नः' अस्मत्पथात् 'अन्यः' पन्थाः 'इतरो देवयानात्' देवपथादन्यः पितृपथ इत्यर्थः। किञ्च 'चक्षुष्मते' पश्यतः 'शृण्वते' शृण्वतः प्रत्यक्षस्यैव 'ते' तव एतदहं 'ब्रवीमि' प्रार्थये। 'मा नः प्रजां रीरिषः' अस्मदीयां प्रजां पुत्रपौत्रादिकां मा हिंसीः। 'मोत वीरान्' उत अप्यर्थे, अस्मदीयान् वीरान् विक्रान्तानपि पुरुषान् मा हिंसीरित्यर्थः॥ २८

इममश्मानमारोहाश्मेव त्वं स्थिरा भव ।
द्विषन्तमप बाधस्व मा च त्वं द्विषतामधः ॥ २९

अनुष्टुबियम् अश्मदेवता अश्माक्रमणे विनियुक्ता। हे कन्यके! 'इमम् अश्मानं' प्रत्यक्षं दृषत्पुत्रकम्[2] 'आरोह' आक्राम। किञ्च 'अश्मा इव' पाषाणवत् 'त्वं' 'स्थिरा भव' दृढ़ा स्याः। किञ्च

1 क—मत्तः सकाशात्।

2 क—दृषत्पट्टकम्।

'द्विषन्तम्' अमित्रम् 'अपबाधस्व' पीड़य। तथा 'द्विषताम्' अरीणाम् 'अधः' 'मा' एव 'भूः'। चकारोऽवधारणे ॥ २८

**इयं नार्युप ब्रूते अग्नौ लाजानावपन्ती।**
**दीर्घायुरस्तु मे पतिः शतं वर्षाणि जीवत्वेधन्तां ज्ञातयो मम ॥ ३०**

उपरिष्टाज्ज्योतिष्मतीयम् आग्नेयी लाजहोमे विनियुक्ता। लाजा भृष्टा व्रीहयः। पतिर्वदति—'इयं' 'नारी' स्त्री 'उपब्रूते' मत्समीपे ब्रूते 'अग्नौ' 'लाजान्' 'आवपन्ती' क्षिपन्ती। किं ब्रूते ? 'दीर्घायुरस्तु मे पतिः'। तदेव विवृणोति—'शतं वर्षाणि जीवतु'। किञ्च 'एधन्तां ज्ञातयो मम' मम स्वजनाः धन-पुत्र-धान्यादिभिर्वर्धन्ताम् ॥ ३०

**कन्यला पितृभ्यः पतिलोकं**
**यतीयमप दीक्षामयष्ट।**
**कन्या उत त्वया वयं धारा**
**उदन्या इवाति गाहेमहि द्विषः ॥ ३१**

त्रिष्टुबियं कन्यादेवता परिणयने विनियुक्ता। इयं कन्यैव 'कन्यला' 'पितृभ्यः' पितृकुलेभ्यः 'पतिलोकं' पतिकुलं 'यती' गच्छन्ती 'अप दीक्षां' दीक्षां वर्जयित्वा, अपशब्दो वर्जने, 'अयष्ट' इष्टवती। दीक्षाशब्देन वैवाहिकं व्रतमुच्यते "त्रिरात्रमक्षारलवणाशिनौ" इत्यादि; तद्वर्जनं कृतवतीत्यर्थः। किञ्च[1] 'कन्या' हे कन्ये। 'उत' अपि च 'त्वया' सहिता 'वयं' 'द्विषः' शत्रून् 'अतिगाहेमहि' अतिक्रामेमहि। 'धारा उदन्या इव' यथा जलधाराः कर्त्र्यः उदन्याः पिपासाः

1 G—कन्या वदति पतिरित्यधिकम्।

कर्मभूताः अतिगाहन्ते[1]। कन्या इति छान्दसत्वात् सम्बुद्धावित्वं न स्यात्[2] ॥ ३१

अर्यमणं नु देवं कन्या अग्निमयक्षत ।

स इमां देवो अर्यमा प्रेतो मुञ्चातु मामुतः ॥३२

उपरिष्टादुबृहतीयं लाजहोमे विनियुक्ता; अर्यमा देवता। स्वरूपमनूद्यते। 'कन्याः' पूर्वम् 'अर्यमणं' 'देवम्' 'अग्निम्' च 'अयक्षत' इष्टवत्यः। 'नु' शब्दः चार्थे। पूर्वार्धेन सामान्योपक्रमः, उत्तरार्धेन विशेषोपसंहारः। 'स' च 'अर्यमा' अग्निश्च इष्टः सन् 'इमां' कन्यां परिणीयमानाम् 'इतः' पितृकुलात् 'प्रमुञ्चातु'; छान्दसं दीर्घत्वम्। 'मा' 'अमुतः' पतिकुलात् ॥ ३२

पूषणं नु देवं कन्या अग्निमयक्षत ।

स इमां देवः पूषा प्रेतो मुञ्चातु मामुतः ॥३३

पौष्णीयम्। पूर्ववद्व्याख्या ॥ ३३

एकमिषे विष्णुस्त्वा नयतु ॥३४

द्वे ऊर्जे विष्णुस्त्वा नयतु ॥३५

त्रीणि व्रताय विष्णुस्त्वा नयतु ॥३६

चत्वारि मायोभवाय विष्णुस्त्वा नयतु ॥३७

पञ्च पशुभ्यो विष्णुस्त्वा नयतु ॥३८

षड् रायस्पोषाय विष्णुस्त्वा नयतु ॥३९

---

1 G—तिरस्कुर्वन्तीति यावत् इत्यधिकम्।

2 संधोऽयं G—पुस्तकादन्यत्र न पठ्यते।

**सप्तसप्तभ्यो होत्राभ्यो[1] विष्णुस्त्वा नयतु ॥ ४०**

विराज इमावैष्णव्यः पादाक्रमणे विनियुक्ताः । हे कन्ये ! 'एकं' पदं 'त्वा' त्वां 'विष्णुः' 'आनयतु'[2] क्रामयतु 'इषे' अर्थलाभाय ॥३४

'द्वे' 'ऊर्जे' बललाभाय ॥३५

'त्रीणि' 'व्रताय' यज्ञकर्मणे ॥३६

'चत्वारि' 'मायोभवाय' सुखप्राप्तये ॥३७

'पञ्च' 'पशुभ्यः' पशुप्राप्तये ॥३८

'षट्' 'रायस्पोषाय' धनप्राप्तये ॥३९

'सप्त' 'सप्तभ्यः' 'होत्राभ्यः' ऋत्विक्प्राप्तये ॥४०

**सखा सप्तपदी भव सख्यं ते गमेयम् ।**
**सख्यं ते मा योषाः सख्यं ते मायोष्ठ्याः[3] ॥४१**

सामको[4] पङ्क्तिरियं कन्यादेवता पादाक्रमणानन्तरमाश्वासने विनियुक्ता । पतिः कन्यां प्रार्थयते ।—हे कन्ये ! त्वं मम 'सखा' सखी सहचारिणी भव, 'सप्तपदी' सप्तपदाक्रान्तेषु अर्थेषु । किञ्च 'सख्यं ते गमेयं' सख्यं मैत्रीं ते तव अहं गमेयं सखा तव भवेयमित्यर्थः । किञ्च 'सख्यं ते मा योषाः' मया सह तव सख्यम् अन्याः योषाः स्त्रियः मा छिन्दन्तु[5] इति शेषः । [6]किञ्च 'सख्यं ते मायोष्ठ्याः' मायः सुखं तस्य उत्थानं मायोष्ठं तत्र भवाः मायोष्ठ्याः सुखकारिण्यः स्त्रियः त्वया सह मम सख्यं कुर्वन्तु इति शेषः ॥ ४१

---

1 ख—क—होत्राभ्य इति पदं नास्ति ।

2 क—नयतु ।

3 क—मायोष्ट्याः ।

4 क—सामिकी ।

5 क—भजन्तु ।

6 क—तथा योः पृथक्करणं तदर्थं स्यायन्ति संहता भवन्तीति योष्याः पृथक्कारिण्यः स्त्रियः ते तव मया सह सख्यं मा पृथक् कुर्वन्त्विति शेषः ।

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥४२

त्रिष्टुबियं प्रेक्षकजनानुमन्त्रणे विनियुक्ता आशास्यमानदेवता। हे प्रेक्षकाः 'सुमङ्गलीः' प्रशस्तमङ्गलफला 'इयं' 'वधूः' परिणीता यतः अतः यूयं 'समेत' समागच्छत, समागत्य च इमां 'पश्यत'। 'अथ' अनन्तरम् 'अस्यै' 'सौभाग्य' 'दत्त्वाय' दत्त्वा यूयम् 'अस्तं' स्वगृहं 'विपरेतन' गच्छत। दत्त्वाय इति "क्त्वो यक्" (पा० ७,१,४७)। विपरेतन इति "तप्तनप्तनथनाश्च" (पा०७,१,४५) इति तस्य तनादेशः। सुमङ्गलीः इति "छन्दसीवनिपौ वक्तव्यौ" (वा०-पा० ५,२,१२२) इति मत्वर्थ ईकारः॥ ४२

समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ।
सं मातरिश्वा सं धाता समुदेष्ट्री दधातु नौ ॥४३

अनुष्टुबियं विश्वेदेवादिदेवता मूर्धाभिषेचने विनियुक्ता। हे कन्ये! 'नौ' आवयोः 'हृदयानि' हृदये 'विश्वे देवाः' 'समञ्जन्तु' शोधयन्तु अकलुषीकुर्वन्तु। तथा 'आपः' जलानि, तथा 'मातरिश्वा' वायुः, तथा 'धाता' प्रजापतिः, तथा 'देष्ट्री' उपदेष्ट्री देवता 'सन्दधातु' एकीकरोतु। समापः इत्यादिषु व्यवहितोपसर्गसम्बन्धः। उ-शब्दः पादपूरणे॥ ४३

गृभ्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धि[1]-
र्मह्यं त्वादुर्गार्हपत्याय देवाः ॥४४

---

1 ख—पुरन्धिः।

त्रिष्टुबियं पाणिग्रहणजपे विनियुक्ता ; भगादयो देवताः। हे कन्यके। 'ते' तव 'हस्तं' 'गृभ्णामि' गृह्णामि। 'सौभगत्वाय' सौभाग्योत्पादनाय 'मया' 'पत्या' सह 'जरदष्टिः' जरान्तं यावत् 'यथा' 'असः' भवसि। किमर्थं पाणिं गृह्णामि ? यस्मात् 'भगः' 'अर्यमा' 'सविता' च 'पुरन्धिः' अग्रणीः एते 'देवाः' 'मह्यं' 'त्वा' त्वां 'गार्हपत्याय' 'अदुः' दत्तवन्तः। गृभ्णामि इति "हृग्रहोर्भश्छन्दसि" (म०-पा० ८,२,३२) इति भकारः। सौभगत्वाय इति सुभगस्येदं सौभगं तस्य भावः सौभगत्वम्। असः इति अस्तेर्लेटि सिपि "बहुलं छन्दसि" ( पा०२,४,७३ ) इति शपो न लुक् ॥ ४४

अघोरचक्षुरपतिघ्न्येधि
शिवा पशुभ्यः सुमनाः सुवर्चाः।
वीरसूर्जीवसूर्देवकामा स्योना
शं नो भव द्विपदे शं चतुष्पदे ॥४५

कन्यादेवतेयं त्रिष्टुप्। हे कन्यके! 'अघोरचक्षुः' अक्रूरदृष्टिः, 'अपतिघ्नी' अपतिघातिनी च 'एधि' भव। तथा 'शिवा पशुभ्यः' पशूनां गोमहिष्यादीनां सुखावहा, 'सुमनाः' प्रसन्नमानसा, 'सुवर्चाः' तेजस्विनी, 'वीरसूः' सत्पुत्रप्रसवा, 'जीवसूः' जीवदपत्या, 'देवकामा' पञ्चमहायज्ञरता, 'स्योना' सुखकरी, तथा 'नः' अस्माकं सम्बन्धिने 'द्विपदे'[1] तथा 'चतुष्पदे' च 'शं' कल्याणरूपा 'भव' इत्याशास्यते ॥४५

आ नः प्रजां जनयतु प्रजापति-
राजरसाय समनक्त्वर्यमा।

---

1 मै—शम् इत्यधिकम्।

**अदुर्मङ्गलीः पतिलोकमा विश**

**शं नो भव द्विपदे शं चतुष्पदे ॥ ४६**

जगतीयं प्राजापत्या। 'प्रजापतिः' स्रष्टा 'नः' अस्माकं 'प्रजां' पुत्रपौत्रादिरूपाम् 'आजनयतु' उत्पादयतु। 'आजरसाय' जरापर्यन्तं ताञ्च प्रजां 'समनक्तु' प्रकटगुणां करोतु 'अर्यमा' देवः। हे कन्यके! यतः[1] 'मङ्गलीः' मङ्गलवत्यो देवताः त्वां मह्यम् 'अदुः' दत्तवत्यः[2]। अतः 'पतिलोकं' पतिकुलम् 'आविश'। आजनयतु इति व्यवहितोपसर्गसम्बन्धः। आजरसाय इति "अव्ययीभावे शरत्प्रभृतिभ्यः" (पा० ५, ४,१०७) इत्यत्र "जराया जरस् च" (वा०) इति पाठ्यने; पञ्चम्यर्थे चतुर्थी। मङ्गलीः इति पूर्ववत् (.,४२—पृ० ४३) ईकारः। "वा छन्दसि" (पा० ६,१,१०६) इति जसि पूर्वसवर्णः॥ ४६

**इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृधि।**

**दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु ॥ ४७**

अनुष्टुबियमैन्द्री। हे इन्द्र! 'मीढ्वः'! सेचक! 'इमां' कन्यां 'सुपुत्रां' श्रेष्ठसुतां 'सुभगां' पतिप्रियां 'त्वं' 'कृधि' कुरु। किञ्च 'अस्यां' 'दश' 'पुत्रान्' 'आधेहि' गर्भीकुरु। 'पतिं' भर्तारम् अस्याः 'एकादशं' 'कुरु' इति प्रार्थ्यते। मीढ्वः इति "दाश्वान् साह्वान् मीढ्वांश्च" (पा० ६,१,१२) इति "मिह सेचने" इत्यस्य क्वसौ निपात्यने, "मतुवसो रु सम्बुद्धौ छन्दसि" (पा० ८,३,१) इति रुत्वम्। कृधि इति कृञो विकरणस्य "बहुलं छन्दसि" (पा० २,४,७३) इति लुक्, "श्रु-शृ-णु-पृ-कृ-वृभ्यश्छन्दसि" (पा० ६,४,१०२) इति हेर्धिभावः॥ ४७

1 मै—पुस्तके पदमिदं न पठ्यते।

2 क—पुस्तके सायणीये मन्त्रब्राह्मणभाष्ये च (१,२,१८) चदुर्मङ्गलीरित्येकपदं कृत्वा दुर्मङ्गलरहितेति व्याख्यानं दृश्यते; तत्र मन्त्रब्राह्मणभाष्ये अदत्यं गुणविष्णुव्याख्यानमेव सायणेन केषाञ्चिन्मतमिति कृत्वा प्रदर्शितमिति प्रतिभाति।

सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ ४८

अनुष्टुबियं कन्यादेवता। हे कन्यके! 'सम्राज्ञी' प्रधानवासिनी 'श्वशुरे' पत्युः पितरि 'भव'। तथा 'श्वश्र्वां' पत्युर्मातरि, तथा 'ननान्दरि' पत्युर्भगिन्यां, तथा 'अधि' उपरि 'देवृषु' देवरेषु। पुनः पुनः सम्राज्ञीग्रहणं गौरवाधिक्यार्थम् ॥ ४८

मम व्रते ते हृदयं दधातु
मम चित्तमनु चित्तं ते अस्तु ।
मम वाचमेकमना जुषस्व
बृहस्पतिस्त्वा[1] नियुनक्तु मह्यम् ॥ ४९

त्रिष्टुबियं प्रार्थनायां विनियुक्ता प्रार्थ्यमानदेवताका। हे कन्यके! 'ते' तव 'हृदयं' मनः 'मम' 'व्रते' कर्मणि 'दधातु' स्थापयतु। अन्यस्य कर्तृपदस्याश्रुतत्वात् सैव प्रथमपुरुषव्यत्ययेनोच्यते। एतदुक्तं भवति—मम व्रते ते हृदयं निधेहीति। अन्यच्च 'मम चित्तम् अनु' 'ते' तव 'चित्तम् अस्तु', आवयोर्हृदयैक्यं भवत्वित्यर्थः। किञ्च 'मम' 'वाचं' वाणीम् 'एकमनाः' अनन्यचेताः सती 'जुषस्व' सेवस्व। किञ्च 'बृहस्पतिः' सुरगुरुः 'त्वा' त्वां 'मह्यं' मदर्थं 'नियुनक्तु' नितरां योजयतु[2] ॥ ४९

लेखासन्धिषु पक्ष्मस्वावर्तेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ५०
केशेषु यच्च पापकमीक्षिते रुदिते च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ५१

---

1 य—०५१।

2 य—"बृहस्पतिरिति 'युष्मत्तत्क्षुः ष्वन्तः पादम्' इति मूर्धन्यः" इत्यधिकम्।

शीले च[1] यच्च पापकं भाषिते हसिते च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥५२
आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥५३
ऊर्वोरुपस्थे जङ्घयोः सन्धानेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥५४
यानि कानि च घोराणि सर्वाङ्गेषु तवाभवन् ।
पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमम् ॥५५

षड़िमा अनुष्टुभः उत्तरविवाहे पाणिग्रहणस्याज्यहोमे विनियुक्ताः कन्यादेवताः । हे कन्यके 'ते' तव 'लेखासन्धिषु', 'पक्ष्मसु' नेत्रपिधानेषु, 'आवर्तेषु' कुकुन्दरादिषु[2] । चकारः समुच्चये । एवम् अलक्षणानि यानि 'ते' तव 'तानि' 'पूर्णाहुत्या' आज्यहोमेन 'सर्वाणि' अशेषाणि 'अहं' पाणिग्राहकः 'शमयामि' ॥ ५०

'केशेषु' चिकुरेषु, 'ईक्षिते' दर्शने, 'रुदिते' अश्रुविमोचने, 'यत्' किञ्चित् 'पापकम्' अलक्षणं 'तानि' 'ते' तव सम्बन्धीनि पूर्णाहुत्येति गतार्थम् ॥ ५१

'शीले' वृत्ते, चकारादाभिरूप्ये च, 'भाषिते' भणिते, 'हसिते' हसने, चकाराद् गमने च । यानि अलक्षणानीति गतार्थम् ॥ ५२

'आरोकेषु' दन्तान्तरेषु[3], 'दन्तेषु' दशनेषु, 'हस्तयोः' पादयोः, चकाराद् गुल्फयोः । यानि अलक्षणानीति गतार्थम् ॥ ५३

---

1 क—प—शीलेषु । भ—मे—शीले ।

2 मे—कुकुन्दरादिद्वारेषु वा ।

3 चकाराद् ओष्ठयोः इत्यधिकम् ।

लेखासन्धिव्यतिरिक्तेषु अन्येषु 'सन्धानेषु', चकारात् मुखे च। यानि अलक्षणानीति गतार्थम् ॥ ५४

'यानि' प्रकृतानि अप्रकृतानि च 'घोराणि' क्रूराणि 'तव' 'सर्वाङ्गेषु' अलक्षणानि 'अभवन्' 'तानि' 'अशोशमम्' अनाशयम् ॥ ५५

**ध्रुवमसि ध्रुवाहं पतिकुले भूयासम् ॥५६**

यजुरिदं ध्रुवदैवतं ध्रुवदर्शने विनियुक्तम्। हे ध्रुव! त्वं 'ध्रुवम् असि' स्थिरो भवसि यतः अतः त्वद्दर्शनात् अहमपि 'पतिकुले' 'ध्रुवा' स्थिरा 'भूयासम्'। ध्रुवमिति लिङ्गव्यत्ययेन नपुंसकत्वम् ॥ ४८

**रुद्धाहमस्मि ॥५७**

वधूदैवतमिदं यजुररुन्धतीदर्शने विनियुक्तम्। हे अरुन्धति! 'अहं' भर्तरि काय-वाङ्-मनोभिः सन्निरुद्धा 'अस्मि' त्वमिवेति तात्पर्यम् अरुन्धतीदर्शने ॥ ५७

**ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्।**
**ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम् ॥५८**

अनुष्टुबियम् अनुमन्त्रणे विनियुक्ता कन्यादेवता। तथा इत्यध्याहार्यम्। यथा 'ध्रुवा' स्थिरा 'द्यौः', यथा 'ध्रुवा पृथिवी', यथा 'ध्रुवं' सचराचरमिदं 'जगत्', यथा च 'ध्रुवासः' स्थिराः 'पर्वताः' इमे, तथा 'इयं स्त्री' पतिकुले 'ध्रुवा' भवतु इति शेषः। ध्रुवासः इति "आज्जसेरसुक्" (पा० ७,१,५०) ॥ ५८

**अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना।**
**बध्नामि सत्यग्रन्थिना मनश्च हृदयञ्च ते ॥५९**

अनुष्टुबियम् अन्नप्राशने विनियुक्ता अन्नदेवता। हे वधु! 'ते' तव 'मनः' चित्तं, चकाराद् बुद्धिञ्च, 'हृदयम्' अन्तर्गतं करणम्, अहं परिणेता 'बध्नामि'। केन? 'अन्नपाशेन' अन्नरूपबन्धनेन, अन्नेनैव यतः

शरीरबन्ध:। 'मणिना' इत्युपमा। आत्मना सह रत्नभूतेन। किञ्च 'पृश्निना'। किम्भूतेन? 'प्राणसूत्रेण' प्राण: सूत्रभूतो यस्य तत् प्राणसूत्रम् अतस्तेन। "अन्नं वै देवा: पृश्नीति वदन्ति"। पुनरपि तदेव विशिष्यते।—'सत्यग्रन्थिना' सत्यं ग्रन्थिरिव यस्य तत् सत्यग्रन्थि तेन ॥ ५९

**यदेतद्धृदयं तव तदस्तु हृदयं मम।**
**यदिदं हृदयं मम तदस्तु हृदयं तव ॥६०**

अनुष्टुबियं प्रार्थ्यमानदेवता हृदयैक्यप्रार्थने विनियुक्ता। आवयो: हृदयैक्यं भवतु इत्यर्थ: ॥ ६०

**अन्नं प्राणस्य षड्विंश[1]स्तेन बध्नामि त्वासौ ॥६१**

द्विपाज्जगतीयम् अन्नस्तुतौ विनियुक्ता अन्नदेवताका। हे वधु! 'अन्नम्' अदनीयं 'प्राणस्य' वायुराजस्य 'षड्विंश:'[1] बन्धनं यत: अत: 'तेन' 'त्वा' त्वाम् 'असौ' अहं भर्ता 'बध्नामि' वशीकरोमि[2] ॥ ६१

**सुकिंशुकं शाल्मलिं विश्वरूपं**
**सुवर्णवर्णं सुकृतं सुचक्रम्।**
**आ रोह सूर्ये अमृतस्य नाभिं**
**स्योनं पत्ये वहन्तं[3] कृणुष्व ॥६२**

त्रिष्टुबियं रथारोहणे विनियुक्ता कन्यादेवता। सूर्यस्य पत्नी सूर्या, सूर्येव सूर्या, उपचारात् प्रकृता वधूरुक्ता। हे 'सूर्ये'! हे वधु!

---

1 क—षड्विंश:। प—षड्विंश:।

2 आ—मै—षड्विंश इति पचेरच: परो विश (आ—विशि:) नुम् छन्दसीति नुमागम:, निपातनात् (मै—वर्गान्त:) आ—गत्वे वर्गान्तत्वे च संयोगान्तलोप: (प—निपाताच्च-वर्गकवर्गान्त:।) षड्विंशी बन्धने प्रोक्त: शुष्कगोमय-मस्तयो: इत्यभिधानकाण्डे—इत्यधिकम्।

3 वहतुम् इत्याकरग्रन्थेषु मुद्रापित: पाठ:।

'वहन्तं' यान्तं रथम् 'आरोह' आक्राम आदित्यपत्नीव आदित्यस्य। किम्भूतम्? 'शाल्मलिं' शाल्मलिमिव, 'सुकिंशुकं' शोभनपलाश-पुष्पाभं रक्तमित्यर्थः; तथा 'विश्वरूपं' नानावर्णं, 'सुवर्णवर्णं' काञ्चन-कान्ति, 'सुकृतं' सुष्ठु कल्पितं, 'सुचक्रं' प्रशस्तपादम्; तथा 'अमृतस्य' पानीयस्य 'नाभिम्' उत्पत्तिस्थानम्। एतदुक्तं भवति—तवाप्येषः पुत्र-पौत्र-धन-धान्यानाम् उत्पत्तिस्थानं भवतु। किञ्च 'स्योनं' सुखं 'पत्ये' वोढ्रे 'कृणुष्व' कुरुष्व। सूर्येति "सूर्याद्देवतायां चाब्[1] वाच्यः[2]" ( वा०—पा० ४,१,४८ ) इति चाप्[1] ॥ ६२

**मा विदन् परिपन्थिनो य आ सीदन्ति दम्पती।**
**सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥६३**

अनुष्टुबियं चतुष्पथाख्यामन्त्रणे विनियुक्ता; पन्थानो देवताः। हे पन्थानः! इमौ 'दम्पती' स्वगृहं यान्तौ 'परिपन्थिनः' चौराः 'मा विदन्' मा जानन्तु। किम्भूताः? 'ये आसीदन्ति' ये अवरु-न्धन्ति। किञ्च 'सुगेभिः' सुगमैः मार्गैः 'दुर्गं' मार्गम् 'अतीताम्' अतिशयेन इतां गच्छतां दम्पती। किञ्च अन्येऽपि 'अरातयः' अनयोः गच्छतोः 'अपद्रान्तु' अपगच्छन्तु। परिपन्थिनः इति "छन्दसि परि-पन्थि-परिपरिणौ पर्यवस्थातरि" ( पा० ५,२,८९ ) इति इनिः। सुगेभिः इति सुखेन गम्यते अत्र इति "सुदुरोरधिकरणे" ( वा०—पा० ३,२, ४८ ) इति डः, "बहुलं छन्दसि" ( पा० ७,१,१० ) इति ऐस् न भवति। दुर्गम् इति पूर्ववद् डः। अपद्रान्तु इति "द्रा कुत्सायां गतौ च" लोट् ॥ ६३

**इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः।**
**इहो सहस्रदक्षिणो अपि पूषा नि षीदतु ॥६४**

---

1 क—टाप्। 2 क—भ—मी—वक्तव्यः।

अनुष्टुबियं गृहप्रवेशे विनियुक्ता; गवादयो देवताः। 'इह' अस्मिन् दम्पत्योः सम्बन्धिनि गृहे हे 'गावः'! यूयं 'प्रजायध्वं' पुत्र-पौत्रादिसन्ततिद्वारेण प्रभूताः[1] भवत। तथा 'अश्वाः', तथा 'पूरुषाः' पुत्रादयः। 'उः' पादपूरणे; 'अपिः' चार्थे। 'इह' अस्मिन् गृहे 'पूषा' अपि देवता 'निषीदतु'। किम्भूतः? 'सहस्रदक्षिणः',—अय-मर्थः—यस्य पूष्णः प्रसादेन गोसहस्रदक्षिणा अपि क्रतवः सम्पद्यन्ते॥६४

इह धृतिः ॥६५

इह स्वधृतिः ॥६६

इह रन्तिः[2] ॥६७

इह रमस्व ॥६८

मयि धृतिः ॥६९

मयि स्वधृतिः ॥७०

मयि रमः ॥७१

मयि रमस्व[3] ॥७२

अष्टौ इमा बृहत्यो वधूदेवता धृतिहोमे विनियुक्ताः। हे वधु! 'इह' अस्मिन् गृहे तव 'धृतिः' मनःप्रसादो भवतु ॥ ६५

तथा 'स्वस्य' त्वदीयस्य बन्धुवर्गस्य 'धृतिः' ॥ ६६

'इह' 'रन्तिः' रमणं क्रीड़ा ॥ ६७

'इह रमस्व' मया सह इति शेषः ॥ ६८

किञ्च 'मयि' भर्तरि तव 'धृतिः' अस्तु ॥ ६९

'मयि स्वधृतिः' मद्विषये स्वस्य त्वदीयस्य बन्धुवर्गस्य धृतिः ॥ ७०

---

1 क—प्रसूताः। 2 भ—रतिः। 3 भा—रम स्वः।

तथा 'मयि' 'रमः' रमणम् ॥ ७१

'मयि' च 'रमस्व'[1] ॥७२[2]

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीस्तामस्या अपजहि ॥७३

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्याः पतिघ्नी तनूस्तामस्या अपजहि ॥७४

चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपुत्र्या तनूस्तामस्या अपजहि ॥७५

सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि। ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्या अपशव्या तनूस्तामस्या अपजहि ॥७६

अग्नि-वायु-चन्द्र-सूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ। ब्राह्मणो वो नाथकाम उपधावामि याऽस्याः पापी लक्ष्मीर्या पतिघ्नी या अपुत्र्या या अपशव्या तनूस्तामस्या अपहत ॥७७

यजुःपञ्चकमिदं चतुर्थीहोमकर्मणि विनियुक्तम् आमन्त्रयमा-

1 ख—'मयि रम स्वः' स्वः स्वर्गे यथा विद्याधरादय. क्रीड़न्ति तथा रमस्व।

2 G—पुस्तके इतःपरम् 'इति तृतीयः खण्डः' इति प्रकरणसमाप्तिवचनं लक्ष्यते।

णाग्नि-वाय्वादिदैवतम्। हे 'अग्ने'! 'प्रायश्चित्ते' दोषाणां निष्कृतेः! 'त्वं' 'देवानाम्' इन्द्रादीनां 'प्रायश्चित्तिः' निष्कृतिः दोषस्य अपहन्ता 'असि' भवसि यतः अतः 'ब्राह्मणः' अहं 'त्वा' त्वाम् 'उपधावामि' उपसर्पामि। किम्भूतः? 'नाथकामः' याञ्चाकामः; "नाथृ नाधृ याञ्चोपतापैश्वर्य्याशीःषु" इति पठ्यते। तामेव याञ्चां दर्शयति—'अस्याः' कन्यायाः 'या' 'पापी लक्ष्मीः' अशुभसम्बन्धिनी शोभा 'ताम्' 'अपजहि' अपहर। तस्याम् अपसारितायाम् अस्याः शुभैव शोभा अवतिष्ठते। उत्तराणि चत्वार्य्यनेनैव व्याख्यातानि॥ ७३

पतिघ्नीति "लक्षणे जायापत्योष्टक्" (पा० ३,२,५२) भर्तृमारिणीति यावत्। तनू-शब्दः समुदायवचनोऽपि अत्र अवयवे वर्त्तते यथा ग्रामो दग्धः इति। अस्याः पतिघ्नीत्वं दूषणम् अपनीय जीवत्पतित्वं[1] कुरु इत्यर्थः॥७४

अपुत्रेयति पुत्रस्य निमित्तं पुत्रया; "पुत्राच्छ च" (पा० ५,१,४०) इति यत्; न पुत्रया अपुत्रया—पुत्रस्य निमित्तं या न भवतीत्यर्थः॥७५

पशूनां गो-महिषादीनां निमित्तं पशव्या "गोद्व्यचो०" (पा० ५,१,३९) इत्यादिना यत्; न पशव्या अपशव्या पशुघातिनीत्यर्थः॥७६

पूर्वकैश्चतुर्भिर्मन्त्रैरग्न्यादयः प्रत्येकमभ्यर्थिताः, अनेन तु समुदितास्त एव प्रार्थ्यन्ते[2]।

"मन्त्राम्नायेऽग्न इत्येवं पञ्चकं लाघवार्थिभिः।
पठ्यते यत् प्रयोगे स्यान्मन्त्राणामत्र विंशतिः॥
अग्नेः स्थाने वायु-चन्द्र सूर्य्या बहुवदूह्य च।
समस्य पञ्चमीं सूत्रे चतुश्चतुरिति श्रुतेः॥
प्रथमे पञ्चके पापी लक्ष्मीरिति पदं भवेत्।
अपि पञ्चसु मन्त्रेषु इति यज्ञविदो[3] विदुः॥

1 प—भ—मैं—जीवपतित्वम्।

2 मै—'अत्र छन्दोगपरिशिष्टं कात्यायनः' इत्यधिकम्। 3 क—मन्त्रवि०।

द्वितीये तु पतिघ्नी स्यादपुत्रेऽरति तृतीयके ।
चतुर्थे त्वपश्यन्त्येति इत्यमाहुतिविंशकम् ॥"

इति छन्दोगपरिशिष्टवचनात् पञ्चानामपि मन्त्राणां विंशतित्वं होमानुष्ठाने ॥ १७

इति छान्दोग्यमन्त्रभाष्ये तृतीयं खण्डम् ।

---

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंषतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥१

अनुष्टुबियं गर्भाधाने विनियुक्ता विष्ण्वादिदेवताका। ते इति प्रत्येकमभिसम्बध्यते। हे वधु ! 'ते' तव 'योनिं' गर्भस्थानं 'विष्णुः' वासुदेवः 'कल्पयतु' प्रसवसमर्थां करोतु। 'त्वष्टा' देवविशेषः 'ते' तव 'रूपाणि' 'पिंषतु' प्रकाशयतु। पिषिः सञ्चूर्णनार्थोऽपि अत्र प्रकाशने वर्तते। किञ्च 'प्रजापतिः' 'आसिञ्चतु' तामेव योनित् ; यावन्मात्रेण बीजेन गर्भो भवति तावन्मात्रमेव प्रक्षेपयतु इत्यर्थः। किञ्च 'धाता' आदित्यः 'ते' तव 'गर्भं' पुत्रार्थं 'दधातु' धारयतु ॥ १

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजौ ॥२

सिनीवाल्यादयो देवताः। पूर्वा अमावस्या सिनीवाली सा प्रार्थ्यते। हे भगवति ! 'सिनीवालि'! अस्यां वध्वां 'गर्भं' 'धेहि' वन्ध्यताम् अपनय। तथा हे 'सरस्वति'! त्वं 'गर्भं धेहि'। किञ्च हे वधु ! 'ते' तव 'अश्विनौ देवौ' 'गर्भम्' 'आधत्तां' कुरुताम्। किम्भूतौ ? 'पुष्करस्रजौ' पद्ममालिनौ ॥ २

**पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ**
**पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥ ३**

मित्रावरुणादयो देवताः; पुंसवने विनियोगः। सापेक्षत्वात् वाक्यस्य यथा इत्यध्याहार्यम् अस्तु इति क्रियापदञ्च। तेनायमर्थः— यथा 'पुमांसौ' 'मित्रावरुणौ', आदित्य-प्रचेतसौ, यथा च 'अश्विनौ' देववैद्यौ, यथा च 'पुमान्' 'अग्निः', यथा च पुमान् 'वायुः', तथा 'तव उदरे' अयं 'गर्भः' 'पुमान्' अस्तु इति ॥ ३

**यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि ॥ ४**
**यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि ॥ ५**
**यद्यसि वसुभ्यो वसुभ्यस्त्वा[1] परिक्रीणामि ॥ ६**
**यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा[1] परिक्रीणामि ॥ ७**
**यद्यस्यादित्येभ्य आदित्येभ्यस्त्वा[1] परिक्रीणामि ॥ ८**
**यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा[1] परिक्रीणामि ॥ ९**
**यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यो देवेभ्यस्त्वा[1] परिक्रीणामि ॥ १०**

सप्त यजूंषि न्यग्रोधशुङ्गाक्रयणे विनियुक्तानि; सोमादयो देवताः। निगदान्येतानि। हे न्यग्रोधशुङ्गे! त्वं 'यदि' 'सौमी' सोमदेवताका 'असि' तदा 'सोमाय' 'राज्ञे' 'त्वा' त्वां 'परिक्रीणामि'। तथा 'यद्यसि वारुणी' इत्यादिषु ॥ ४—१०

**ओषधयः सुमनसो भूत्वा अस्यां वीर्यं समाधत्त।**
**इदं कर्म करिष्यति ॥ ११**

---

१ भा—पुस्तके त्वेतिपदादुत्तरं 'राज्ञे' इत्यधिकं पदं दृश्यते।

यजुरिदम् ओषधिदेवतं छेदने विनियुक्तम् । हे 'ओषधयः' । यूयं 'सुमनसः' प्रसन्नचेतसो 'भूत्वा' 'अस्यां' क्रीतायां वटशुङ्गायां 'वीर्यं' सामर्थ्यं 'समाधत्त' अर्पयत । यतः 'इदं' 'कर्म' पुंसवनलक्षणं 'करिष्यति' ॥ ११

**पुमानग्निः पुमानिन्द्रः पुमान् देवो बृहस्पतिः ।**

**पुमांसं पुत्रं विन्दस्व तं पुमाननु जायताम् ॥ ॥१२**

अनुष्टुबियम् ; न्यग्रोधशुङ्गारसस्य दाने विनियोगः, अग्न्यादयो देवताः । अत्रापि यथा इत्यध्याहार्यम् । हे वधु ! यथा 'पुमान् अग्निः' 'पुमान् इन्द्रः' 'पुमान् देवो बृहस्पतिः', तथा तद्रूपबुद्धिविभवसदृशं 'पुत्रं' 'विन्दस्व' लभस्व । किञ्च 'तम्' 'अनु' तस्य पुत्रस्य जातस्य पश्चाद् अन्योऽपि 'पुमान्' पुत्रः तव 'जायताम्' ॥ १२[1]

**अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव ।**

**पर्णं वनस्पते नुत्त्वा नुत्त्वा सूयतां रयिः ॥१३**

स्त्री देवता, उदुम्बरफलयुगलबन्धने विनियोगः, छन्दोऽनुष्टुप् । हे कल्याणि ! 'अयं वृक्षः' उदुम्बराख्यः 'ऊर्जावतः' ऊर्जावान् प्रभूतफलः तथा प्रशस्ततरः यतः अतस्त्वम् 'ऊर्जीव' उदुम्बरीव 'फलिनी' पुत्रिणी 'भव' । किञ्च हे 'वनस्पते' ! उदुम्बर ! अस्यां प्रसुतायां स्त्रियां त्वया 'रयिः' पुत्रधनं 'सूयतां' प्रसूयताम् । किमिव ? 'पर्णम्' इव । किं कृत्वा[2] ? 'नुत्त्वा नुत्त्वा' प्रेर्य प्रेर्य "णुद प्रेरणे"[3] । ऊर्जावतः इति प्रथमार्थे षष्ठी[4] ।

---

1 G—पुस्तके इतःपरम् 'इति चतुर्थः खण्डः' इति प्रकरणसमाप्तिवचनं लक्ष्यते ।

2 G—पुस्तक एव लभ्यते ।

3 मै—पुस्तके धातुपाठोऽयं नास्ति ।

4 य—पुस्तके एव दृश्यते ।

येनादितिः सीमानं नयति
प्रजापतिर्महते सौभगाय ।
तेनाहमस्यै सीमानं नयामि
प्रजामस्यै जरदष्टिं कृणोमि ॥१४

त्रिष्टुबियं स्त्रीदेवता सीमन्तोन्नयने विनियुक्ता। 'प्रजापतिः' जगतः स्रष्टा 'येन' शरेण वीरतरेण 'अदितिः' देवमातुः 'सीमानं' सीमन्तं 'नयति' नीतवान्। किमर्थम्? 'महते' महते 'सौभगाय'। 'तेन' शरेण 'अहं' भर्ता 'अस्यै' अस्याः स्त्रियाः 'सीमानं' सीमन्तं 'नयामि' करोमि। 'प्रजां' पुत्रपौत्रादिकां 'जरदष्टिं' जरापर्यन्तां दीर्घकालजीविनीं 'कृणोमि' करोमि। सौभगाय इति सुभगमन्त्र इति युवादिषु पठ्यते, तेन अण्। अस्यै इति "षष्ठ्यर्थे चतुर्थीति वाच्यम्" ( वा०—पा० २,३,६२ ) इति चतुर्थी ॥ १४

राकामहं सुहवां सुष्टुती हुवे
शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वयः[1] सूच्याच्छिद्यमानया
ददातु वीरं शतदायमुक्थ्यम् ॥१५

जगतीयं राकादेवता पूर्णतकुणा सीमन्तोन्नयने विनियुक्ता। पूर्वपौर्णमासी अनुमतिः, उत्तरा तु 'राका' इत्युच्यते। ताम् 'अहं' भर्त्ता 'हुवे' ह्वयामि। किम्भूताम्? 'सुहवां' शोभनाह्वानाम्। कया हुवे? 'सुष्टुती' शोभनया स्तुत्या। आह्वानप्रयोजनमाह—'शृणोतु' 'नः' अस्माकं वचः। किम्भूता सा? 'सुभगा' शोभनपुण्या। न केवलं शृणोतु अपि च 'त्मना' आत्मना 'बोधतु' अवधारयतु। सैव

1 सीव्यत्वपः इति सायणभट्टकीर्त्ती मन्त्रब्राह्मणगतः पाठः।

भूयः प्रार्थ्यते—'अयः' एतत् पुत्रजननकर्म्म पुत्रपौत्रादिलक्षणं 'सीव्यतु'। कया? 'सूच्या' सङ्घट्टनशीलया। किम्भूतया? 'अच्छिद्यमानया' अभज्यमानया। किञ्च 'वीरं' पुत्रं 'ददातु'। किम्भूतम्? 'शतदायमुख्यं' शतदायवः प्रभूतदातारः तेषु मुख्यं प्रधानम्। दायुरौणादिकः। सुष्टुतो इति "सुपां सुलुक्०" (पा० ७,१,३९) इति पूर्वसवर्णः। हुवे इति "बहुलं छन्दसि" (पा० ६,१,३४) इति सम्प्रसारणम्। त्मना इति "मन्त्रेष्वाड्यादेरात्मनः" (पा० ६,४,१४१) इत्याकारलोपः। अयः इति अदसो दकारस्य व्यत्ययेन यकारः॥१५

यास्ते राके सुमतयः सुपेशसो
याभिर्ददासि दाशुषे वसूनि।
ताभिर्नो अद्य सुमना उपा गहि
सहस्रपोषं सुभगे रराणा॥१६

शलल्या सीमन्तोन्नयने विनियोगः। हे 'राके'! 'याः' 'ते' तव 'सुमतयः' शोभनबुद्धयः। किम्भूताः? 'सुपेशसः' सुरूपाः। किञ्च 'याभिः' त्वं 'दाशुषे' यजमानाय 'वसूनि' धनानि 'ददासि'। 'ताभिः' सुमतिभिः उपलक्षिता त्वम् 'अद्य' अहनि 'नः' अस्माकम् 'उप' समीपम् 'आगहि' आगच्छ। किम्भूता? 'सुमनाः' प्रसन्नहृदया। किं कुर्वाणा? हे 'सुभगे'! सर्वलोकवल्लभे! 'सहस्रपोषं' बहुजनपोषकं सुतं 'रराणा' ददाना। दाशुषे इति "दाशृदाने" "दाश्वान् साह्वान् मीढ्वांश्च" (पा० ६,१,१२) इति लिटि क्वसौ निपात्यते, चतुर्थ्येकवचने वसोः सम्प्रसारणम्। उपागहि इति "बहुलं छन्दसि" (पा० २,४,७३) इति शपो लुक्, "अनुदात्तोपदेश०" (पा० ६,४,३७) इत्यादिना अनुनासिकलोपः, तस्य "असिद्धवदत्राभात्" (पा० ६,४,२२) इत्यसिद्धत्वाद् "अतो हेः"

( पा० ६,४,१०५ ) इति हेर्लुग् न भवति। सहस्रपोषम् इति कर्मण्यण्। रराणा इति "रा दाने" इत्यस्मात् परस्य शपो "बहुलं छन्दसि" ( पा० २,४,७६ ) इति श्लुः, "श्लौ" ( पा० ६,१,१० ) इति द्विर्वचनं, व्यत्ययेनात्मनेपदं शानच्॥ १६

**किं पश्यसि प्रजां पशून् सौभाग्यं मह्यं दीर्घायुष्टं पत्युः॥१७**

यजुरिदं स्त्रीदैवतं स्थालीपाकावेक्षणे विनियुक्तम्। हे कल्याणि! अस्मिन् स्थालीपाके आत्मसम्बन्धित्वेन 'प्रजां' पुत्रपौत्रादिकाम्, 'पशून्' गो-महिषादिकान्, 'सौभाग्यं', 'मह्यं' मम 'पत्युः' 'दीर्घायुष्टं' बहुकालजीवित्वं 'किं पश्यसि'? एवं प्रश्नपूर्वमुक्ता सती उत्तरमाह—सर्वं भवदुक्तं पश्यामि इति। मह्यम् इति षष्ठ्यर्थे चतुर्थी॥ १७

**या[1] तिरश्ची निपद्यते अहं विधरणी इति।**
**तां त्वा घृतस्य धारया यजे संराधनीमहम्।**
**संराधन्यै देव्यै देष्ट्र्यै स्वाहा॥१८**

यजुरिदं सोष्यन्तीहोमे विनियुक्तं संराधनीदैवतम्। 'या'[2] तव शुभे कर्मणि प्रस्तूयमाने 'अहं' 'विधरणी' शुभफलविघातकारिणी इत्येवं मन्यमाना 'तिरश्ची' वाञ्छितफलविघ्नकरी 'निपद्यते' सम्पद्यते 'अहं' 'तां त्वा' त्वां देवतां 'यजे' पूजयामि। कया? 'घृतस्य धारया' आज्याहुत्या। किम्भूतां त्वाम्? 'संराधनीं' सम्यक्साधिनीं प्राणिनाम् इष्टफलस्य। 'संराधन्यै' 'देव्यै' 'देष्ट्र्यै' इष्टफलदात्र्यै। 'स्वाहा' इति वाक्यशेषो "मन्त्रान्ते स्वाहाकारः" इति परिभाषितत्वात्[3]। तिरश्चीति

---

1 ख—ते इत्यधिकम्। 2 ख—प—भ—ते इत्यधिकम्।

3 G—मन्त्रादन्यत्र स्वाहेतीत्येतावन्मात्रम्।

तिरः अञ्चतीति क्विन् "अञ्चेश्चोपसंख्यानम्" ( वा०—पा० ४,१,६) इति ङीप्, "अचः" ( पा० ६,४,१३८ ) इत्यकारलोपः ॥ १८

**विपश्चित् पुच्छमभरत्तद्धाता पुनराहरत् ।**
**परेहि त्वं विपश्चित् पुमानयं जनिष्यते ॥**
**असौ नाम ॥१९**

अनुष्टुबियं विपश्चिद्देवता । 'विपश्चिद्' देवविशेषः ; सः 'पुच्छं' शिश्नं शिशूनाम् 'अभरत्' हृतवान्, 'तत्' पुच्छं 'धाता' प्रजापतिः विपश्चिता हृतं 'पुनः आहरत्' आनीतवान् यतः अतः हे 'विपश्चित्' ! 'त्वं' 'पर' ! श्रेष्ठ ! 'एहि' अस्मिन् कर्मणि सन्निहितो भव, येन 'अयं' 'पुमान्' 'जनिष्यते' उत्पत्स्यते । 'असौ नाम' देवदत्ताभिधान इत्यर्थः । अभरत् इति "हृग्रहोः०" ( वा०–पा० ३,१,८४ ) इत्यादिना हकारस्य भकारः[1] ॥ १९

**इयमाज्ञेदमन्नमिदमायुरिदममृतम् ॥२०**

यजुरिदम् अन्नदैवतं व्रीहियवचूर्णेन कुमारस्य जिह्वामार्जने विनियुक्तम् । हे बालक ! 'इदं' प्रत्यक्षम् 'अन्नम्', 'इयम्' 'आज्ञा' प्रज्ञा आ समन्तात् सम्यक्प्रकारेण[2] ज्ञानहेतुत्वात्, 'इदम्' 'आयुः' प्राणधारणम्, 'इदम्' 'अमृतम्' अनेन विधिना उपयुज्यमानम् अमरणधर्मि तत्त्वं[3] तव अस्तु इति शेषः ॥ २०

**मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते ।**
**मेधां ते अश्विनौ देवावा धत्तां पुष्करस्रजौ ॥२१**

अनुष्टुबियं सर्पिःप्राशने विनियुक्ता, मित्रावरुणाग्न्यश्विनो देवताः । हे बालक ! 'मेधां' पाठश्रवणविषयां शक्तिं 'ते' तव 'मित्रावरुणौ'

---

1 प—"परेहीति पराशब्दाकारलोपश्छान्दसः" इत्यधिकम् ।

2 प—सं—समन्तात्कारेण । 3 प—पुस्तकादन्यत्र पदमिदं न दृश्यते ।

'देवौ' 'आधत्ताम्'। तथा 'अग्निः' 'दधातु'। तथा 'अश्विनौ'। किम्भूतौ? 'पुष्करस्रजौ' पद्ममालिनाविव ॥ २१

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्।**
**सनिं मेधामयासिषम् ॥२२**

गायत्रीयम् इन्द्रदेवताका सर्पिःप्राशने विनियुक्ता। 'सदसः' सभायाः 'पतिं' मुख्यम् 'अद्भुतम्' आश्चर्यरूपं 'प्रियम् इन्द्रस्य' इन्द्रस्य वल्लभं 'काम्यम्' अभीष्टार्थसम्पादकं 'मेधां सनिं' "धीर्धारणावती मेधा" तस्या दातारं सुराचार्यम् अहम् 'अयासिषं' शरणत्वेन प्राप्तवानस्मि ; सः अस्मै कुमाराय मेधां ददातु इत्याशंसा वाक्यार्थः। सनिम् इति "छन्दसि वनसनरक्षिमथाम्" ( पा० ३,२,२७ ) इति इन्। अयासिषम् इति यातेर्लुङि मिप्। मेधामिति व्यत्ययेन षष्ठ्यां द्वितीया॥ २२

**यत्ते सुसीमे हृदयं हितमन्तः प्रजापतौ।**
**वेदाहं मन्ये तद्ब्रह्म माऽहं पौत्रमघं निगाम् ॥२३**

अनुष्टुप् चान्द्री चन्द्रदर्शने विनियुक्ता। हे चन्द्र! 'यत्' 'ते' तव 'अन्तः' मध्ये 'सुसीमे' अतिशीतले 'प्रजापतौ' प्रजानाम् आनन्दजनकत्वेन पत्याविव स्वामिनीव 'हितं' निहितम् अर्पितं 'हृदयम्' ब्रह्मस्थानं[1] 'तद्' 'ब्रह्म' आत्मा तत्स्थानत्वात् 'अहं' 'वेद' जानामि—तत् 'मन्ये' एवमेवेति मन्ये यस्मात् तस्मात् 'पौत्रं' पुत्रसम्बन्धि 'अघं' व्यसनम् अनिष्टयोग-व्याधि-नाशादिरूपम् अहं 'मा निगां' न निगच्छेयं मा प्राप्नुयाम् इति यावत्। अयमर्थः—यस्मात् अहं ब्रह्मवित् तस्मात् मम अनिष्टसम्बन्धो न घटेत[2]। निगाम् इति "इण गतौ" माङि लुङि "इणो गा लुङि" (पा० २,४,४५) इति गादेशः॥ २३

---

1 मी—निहितं हृदयम् अर्पितं ब्रह्मस्थानम्। 2 प—भ—मी—ढौकते।

**यत् पृथिव्या अनामृतं दिवि चन्द्रमसि स्थितम् ।**
**वेदामृतस्याहं नाम माऽहं पौत्रमघं रिषम् ॥२४**

अनुष्टुबियं चन्द्रदेवता चन्द्रदर्शने विनियुक्ता। 'यत्' 'पृथिव्याः' 'अनामृतम्' अमृतं 'दिवि' द्युलोके 'चन्द्रमसि' 'स्थितम्' आश्रितं तत् 'अहम्' 'अमृतस्य' 'नाम' 'वेद' जानामि यतः अतः [1]'पौत्रम् अघम्' 'अहम्' 'मा रिषं' मा गमम्। "रिषी गतौ" माङि लुङ्, मिप्, छान्दसत्वात् च्लेरङ्[2]। अघं रिषम् इति छान्दसत्वात् अच्यपि रिकारे अनुस्वारः ॥ २४

**इन्द्राग्नी शर्म यच्छतं प्रजायै मे प्रजापती ।**
**यथाऽयं न प्रमीयेत पुत्रो जनित्र्या अधि ॥२५**

अनुष्टुबियं वरप्रार्थने विनियुक्ता ; इन्द्राग्नी देवते। । हे 'इन्द्राग्नी' ! युवां 'मे' मम 'प्रजायै' 'शर्म' कल्याणं 'यच्छतं' दत्तम्। किम्भूतौ युवाम् ? 'प्रजापती' लोकपालौ। तथा शर्म यच्छतं 'यथा' 'अयं' कुमारः 'जनित्र्याः' 'अधि' उत्सङ्गे स्थितो 'न प्रमीयेत' न हिंस्येत। "मीङ हिंसायाम्" ॥ २५

**यददश्चन्द्रमसि कृष्णं पृथिव्यां हृदयं श्रितम् ।**
**तदहं विद्वाँस्तत् पश्यन् माऽहं पौत्रमघं रुदम् ॥२६**

अनुष्टुबियं चन्द्रदेवता वरप्रार्थने विनियुक्ता। 'यत्' 'अदः' एतत् 'चन्द्रमसि' 'कृष्णं' लाञ्छनं 'पृथिव्याः' 'हृदयं' 'श्रितम्' आश्रितम्, 'तत् अहं विद्वान्' तत् स्वरूपं जानन् 'तत्' च 'पश्यन्' दृष्टवान् अस्मि यतः अतः 'अहं' 'पौत्रम् अघं' 'मा रुदं' मा रुद्याम् ॥ २६

---

1 मै—माऽहं पौत्रमघम् रिषं गच्छेयम्।

2 अंशोऽयं मै—पुस्तके नास्ति।

**कोऽसि कतमोऽस्येषोऽस्यमृतोऽसि ।**
**आहस्पत्यं मासं प्रविशासौ ॥२७**

यजुरिदम् आदित्यदेवतं नामकरणे विनियुक्तम् । 'असौ' आमन्त्रणे । हे देवदत्त ! 'कोऽसि' कस्त्वम् असि ? इति स्वरूपप्रश्नः । 'कतमोऽसि' किंजातीयोऽसि ? इति जातिप्रश्नः । 'एषोऽसि', इति प्रत्यक्षनिर्देशः । 'अमृतोऽसि' अविनाशी असि यतः अतस्त्वम् 'आहस्पत्यं' 'मासं' सूर्यस्य मासं संक्रान्तिचिह्नितं 'प्रविश' ॥ २७

**स त्वाह्ने परि ददात्वहस्त्वा रात्र्यै परि ददातु रात्रिस्त्वाहोरात्राभ्यां परि ददात्वहोरात्रौ त्वार्धमासेभ्यः परि दत्तामर्धमासास्त्वा मासेभ्यः परि ददतु मासास्त्वर्तुभ्यः परि ददत्वृतवस्त्वा संवत्सराय परि ददतु संवत्सरस्त्वायुषे जरायै परि ददात्वसौ ॥२८**

आहस्पत्यमासप्रवेशस्य फलमेतत् । 'असौ' हे देवदत्त ! 'सः' 'अहस्पतिः' 'त्वा' त्वां 'अह्ने' दिवसाय 'परिददातु' समर्पयतु संवर्धनाय यावच्छतायुष्ट्वम् । मासस्य विशेषणभूतोऽपि अहस्पतिरत्र प्राधान्यात् स इत्यनेन प्रत्यवमृष्यते[1] ॥ २८

**अन्नं वा एकच्छन्दस्यमन्नं ह्येकम् ।**
**भूतेभ्यश्छन्दयति ॥२९**

गायत्रीयम् आदित्यदेवता पुरुषाधिपत्यकामस्य चतुष्पथेऽग्नावादित्याभिमुखस्याज्यहोमे विनियुक्ता । 'अन्नं' 'वै' किल 'एकच्छन्दस्यम्' एकं प्रधानं [2]तय्यात्मकत्वेनामोदादित्यर्थः ; एकच्छन्दः अन्न

1 भा—परामृष्यते ।    2 भा—तय्या० । मे—तय्या० ।

भवम् एकच्छन्दस्यम्। किं तत्? 'अन्नम्'। 'हि' यतः 'एकं' 'भूतेभ्यः' भूतानां तृप्त्यर्थं छन्दयति प्रवर्तते। अयमर्थः—यथा आदित्यस्य रश्मिजालं वृष्ट्यम्भसा लोकान् छन्दयति आवृणोति, तथा ममान्नमपि मम आदित्यप्रसादात् बहुतरं भवतु, येन अहं पुरुषेषु अधिपतिः भवानीत्यर्थः। एकच्छन्दस्यम् इति "भवेच्छन्दसि" (पा० ४,४,११४) इति यत्॥ २९

श्रीर्वा एषा यत् सत्वानो विरोचनो मयि सत्त्वमव दधातु॥३०

यजुरिदं विरोचनदैवतम्। 'श्रीः' 'वै' किल 'एषा' प्रत्यक्षा। किं? 'यत् सत्वानः' ये ईश्वराः तेषु मध्ये 'विरोचनः' आदित्यः 'मयि' 'सत्त्वम्' आधिपत्यम् 'अवदधातु' अर्पयतु। यदिति "सुपां सुलुक्०" ( पा० ७,१,३९ ) इति विभक्तिलोपः। सत्वानः इति सच्छब्दात् मत्वर्थे "छन्दसीवनिपौ वक्तव्यौ" (वा०—पा० ५,२,१२२) इति वनिप्॥ ३०

अन्नस्य घृतमेव रसस्तेजःसम्पत्कामो जुहोमि॥३१

बृहतीयम् अन्नदैवता। 'अन्नस्य' 'घृतमेव' 'रसः' सारः; तथा च "यद् घृतं तद् भोजनम्" इति जनप्रवादः। 'तेजः' 'सम्पत्' आधिपत्यं तत्कामयमानः अहं घृतं 'जुहोमि' स्वाहा॥ ३१

क्षुधे स्वाहा॥३२

क्षुत्पिपासाभ्याम् स्वाहा॥३३

यजुषी इमे वृत्त्यविच्छित्तिकामस्य सायं प्रातः क्षुत्तृषाहोमे विनियुक्ते क्षुत्पिपासादैवते॥ ३२-३३

**अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः ।**

**प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे शं चतुष्पदे[1] ॥३४**

बृहतीयम् अन्नपतिर्देवता अन्नप्राशने विनियुक्ता। हे 'अन्नपते' सूर्य! "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति स्मृतेः। 'अन्नस्य' अदनीयस्य, 'अनमीवस्य' आरोग्यकरस्य, 'शुष्मिणः' अग्नि-वृद्धिकरस्य 'ऊर्जं' बलं धेहि। किञ्च अन्नस्य 'प्रदातारं' 'तारिषः' तारय। तथा 'नः' अस्माकं 'द्विपदे' 'चतुष्पदे' च 'शं' सुखं 'धेहि'। अमीव इति रोग उच्यते। तारिष इति "तॄ प्लवन-तरणयोः" प्रार्थनायां "लिङर्थे लेट्" (पा० ३,४,७) सिप्, "लेटोऽडाटौ" ( पा० ३,४,९४ ) इति अट्, "सिब्बहुलं लेटि" (पा० ३,१,३४) इति सिप्, णिलोपः आगमानित्यत्वाल्लेटः,[2] "इतश्च लोपः परस्मैपदेषु" ( पा० ३,४,९७ ) इतीकारलोपः, सकारस्य रुत्व-यत्व-यलोपाः ॥ ३४

**अङ्गादङ्गात् संस्रवसि हृदयादधि जायसे ।**

**प्राणं ते प्राणेन सन्दधामि जीव मे यावदायुषम् ॥३५**

अनुष्टुबियं प्राजापत्या मूर्धोपग्रहणजपे विनियुक्ता। हे पुत्र! यः त्वं मम 'अङ्गात् अङ्गात्' शिरोग्रीवादिभ्यः 'संस्रवसि' संस्रुतोऽसि, तथा[3] 'हृदयात्' सर्वगात्रेभ्यः प्रधानभूतात् 'अधिजायसे' उत्पन्नोऽसि। अस्य इत्थम्भूतस्य 'ते' तव 'प्राणं' वायुं [ 'मे' मम ] 'प्राणेन' एव 'सन्दधामि' सततम् अविच्छिन्नं करोमि। तत्सन्धानात् 'यावदायुषं' शतवर्षपर्यन्तं 'जीव', "शतायुर्वै पुरुषः" इति श्रुतेः। यावदायुषम् "अव्ययीभावे शरत्प्रभृतिभ्यः" (पा० ५,४,१०७) इति टच् ॥३५

---

1 "प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे" इत्याकरग्रन्थेषु मुद्रापितः पाठः।

2 वाक्यांशोऽयं मै—पुस्तके न दृश्यते।

3 भा—भ—मै—'हृदयादधिजायसे' इत्यधिकम।

अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे ।
वेदो वै पुत्रनामासि स[1] जीव शरदः शतम् ॥३६

'वेदः' 'वै' किल 'असि' 'पुत्रनामा'। वेदाध्येतरि वेदशब्दप्रयोगः कठशाखाध्येतरि कठशब्दवत् ॥३६

अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
आत्मासि पुत्र मा मृथाः स[1] जीव शरदः शतम् ॥३७

हे 'पुत्र'! 'अश्मा' पाषाण इव दृढो निर्व्याधिः 'भव'। 'परशुः' कुठार इव छेदको 'भव', न तु छेद्यः। तथा 'हिरण्यं' सुवर्णं 'भव' 'अस्तृतम्' अन्यैस्ताम्रादिभिः अपद्रव्यैः आच्छादितं यत् न भवति। 'आत्मा असि' अहमिव त्वम्। अतो 'मा मृथाः' न म्रियस्व ॥३७

पशूनां त्वा हिंकारेणाभिजिघ्राम्यसौ ॥३८

यजुरिदम्। 'असौ' हे पुत्र! 'त्वा' त्वाम् अहं पिता 'पशूनां' गवां 'हिंकारेण' हुङ्कृतेन 'अभिजिघ्रामि' मूर्ध्नि चुम्बामि। यथा गावो वनादागताः स्वपुत्रकान् आभिमुख्येन जिघ्रन्ति तथा अहमपि त्वाम् ॥३८[2]

आयमगात् सविता क्षुरेण ॥३९

उष्णेन वाय उदकेनेधि ॥४०

आप उन्दन्तु जीवसे ॥४१

विष्णोर्दंष्ट्रोऽसि ॥४२

ओषधे त्रायस्वैनम् ॥४३

१ मै—सं।

२ G—पुस्तके इतःपरम् 'इति प्रथमः खण्डः' इति खण्ड-समाप्तिवचनं वर्तते।

स्वधिते[1] मैनं हिंसीः ॥४४

येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायुष्ट्वाय बलाय[2] वर्चसे ॥४५

सप्तेमानि यजूंषि चूडाकरणे विनियुक्तानि प्रतिमन्त्रोपात्तसवित्रादिदेवताकानि। हे कुमार! 'अयं' नापितः 'सविता' देवः 'क्षुरेण' 'आगात्' आगतवान्। किमर्थम्? त्वच्चूडाकरणाय। आङो व्यवहितेन सम्बन्धः ॥३८

हे 'वायो'! त्वमपि 'उष्णेन' 'उदकेन' गृहीतेन कुमारशिरः प्लावयितुम् 'एधि' आगच्छ। "अङितश्च" (पा० ६,४,१०३) इति धिभावः ॥४०

वायुना आनीता या 'आपः' हे कुमार! ताः त्वाम् 'उन्दन्तु' क्लेदयन्तु। "उन्दी क्लेदने"। किमर्थम्? 'जीवसे' जीवनाय। जीवसे इति "तुमर्थे सेनसे" (पा० ३,४,९) इत्यादिना असे प्रत्ययः ॥४१

हे क्षुर! त्वं 'विष्णोः' 'दंष्ट्रोऽसि' दन्तोऽसि ॥४२

हे 'ओषधे'! दर्भ! 'एनं' कुमारं 'त्रायस्व' रक्ष ॥४३

स्वधितिः[3] औदुम्बरः क्षुरः। हे 'स्वधिते'! 'एनं' कुमारं 'मा हिंसीः' न हिंसिष्यसि ॥४४

'येन' स्वधितिना[4] 'पूषा' देवः 'बृहस्पतेः वायोः इन्द्रस्य च' 'अवपत्' भद्राकृतवान् मुण्डनं कृतवानित्यर्थः, 'तेन' स्वधितिना 'ब्रह्मणा'

1 भा—प—भ—सुधिते।

2 पदमिदं सायणव्याख्याते म[illegible]जीयमन्त्रे न धृतम्।

3 भा—प—भ—सुधितिः। 4 भा—प—भ—सुधितिना

ब्रह्मभूतेन 'ते' तव 'वपामि' भद्राकरोमि। किमर्थम् ? 'जीवातवे' ; एतद्व्याचष्टे—'जीवनाय' ; अस्यैवार्थः—'दीर्घायुष्ट्वाय', 'बलाय', 'वर्चसे' तेजोवृद्ध्यर्थम् ॥४५

**त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्ते अस्तु त्र्यायुषम् ॥४६**

'जमदग्नेः' महर्षेः 'कश्यपस्य' 'अगस्त्यस्य' 'देवानाम्' इन्द्रादीनां 'यत्' 'त्र्यायुषं' त्रीणि आयूंषि बाल-युव-स्थविरत्वानि 'तत्' 'त्र्यायुषं' हे भद्रक ! 'ते अस्तु' तव भवतु। त्र्यायुषम् इति "अचतुरा"दि सूत्रेण (पा० ५,४,७८) अच् समासान्तः ॥४६

**अग्ने व्रतपते व्रतञ्चरिष्यामि तत् ते प्र ब्रवीमि तच्छकेयम्। तेनर्ध्यासं[1] समिदमहमनृतात् सत्यमुपैमि ॥४७**

**वायो व्रतपते व्रतञ्चरिष्यामि तत् ते प्र ब्रवीमि तच्छकेयम्। तेनर्ध्यासं[1] समिदमहमनृतात् सत्यमुपैमि ॥४८**

**सूर्य व्रतपते व्रतञ्चरिष्यामि तत् ते प्र ब्रवीमि तच्छकेयम्। तेनर्ध्यासं[1] समिदमहमनृतात् सत्यमुपैमि ॥४९**

1 मन्त्रब्राह्मणे "तेनर्ध्यासम्। इदमहमनृतात्" इत्येवंरूपः सायणीयव्याख्यानुसारी पाठो मु[illegible]पितः।

चन्द्र व्रतपते व्रतञ्चरिष्यामि तत् ते प्र ब्रवीमि तच्छकेयम् । तेनर्द्ध्या[1] समिदमहमनृतात् सत्यमुपैमि ॥५०

व्रतानां व्रतपते व्रतञ्चरिष्यामि तत् ते प्र ब्रवीमि तच्छकेयम् । तेनर्द्ध्या[1] समिदमहमनृतात् सत्यमुपैमि ॥५१

पञ्च यजूंषि उपनयनहोमे विनियुक्तानि प्रतिमन्त्रोपात्ताग्न्यादि-देवताकानि । उपनीयमानो माणवकः अग्निं प्रार्थयते—हे 'अग्ने' ! 'व्रतपते' ! शास्त्रीयस्य नियमस्य पालक ! यत् इदं 'व्रतम्' उपनय-नाख्यं 'चरिष्यामि' अनुष्ठास्यामि 'तत्' व्रतं 'ते' तुभ्यं 'प्रब्रवीमि' कथयामि निवेदयामि इति यावत् । येन 'तत्' व्रतम् अहं त्वत्प्रसा-दात् चरितुं सुखेन 'शकेयं' शक्नोमि । व्रतचरणस्य फलमाह—'तेन' उपनयनव्रतेन करणभूतेन अहम् 'ऋद्ध्या' समृद्धिम् अध्ययनलक्षणां प्राप्नुयाम् इति शेषः । तथा 'अहम्' 'अनृतात्' अलीकवचनात् पृथक्-भूत्वा 'इदं' व्रतं 'सत्यं' सत्यवचनस्वरूपं 'समुपैमि' सम्यगुपैमि । अय-मर्थः—योऽहं प्रागुपनयनात् यथेष्टाचार आसं सोऽहम् अधुना परि-त्यक्तानृतवादः सत्यभूतम् इदं व्रतं चरिष्यामि । शकेयम् इति "लिङ्याशिष्यङ्" ( पा० ३,१,८६ ) । ऋद्ध्या इति द्वितीयार्थे तृतीया । समुपैमि व्यवहितोपसर्गसम्बन्धः ॥४७

'व्रतानां' यज्ञानां 'व्रतस्य' नियमस्य 'पतिः' इन्द्रः ॥४८—५१

---

१ मन्त्रब्राह्मणे "तेनर्ध्यासम् । इदमहमनृतात्" इत्येवंरूपः सायणीयव्याख्यानुसारी पाठो मुद्रापितः ।

**आगन्त्रा समगन्महि प्र सुमर्त्यं युयोतन ।**
**अरिष्टाः सञ्चरेमहि स्वस्ति सञ्चरतादयम् ॥५२**

अनुष्टुबियं माणवकं प्रेक्षमाणस्य आचार्यस्य जपे विनियुक्ता ; अग्न्यादय एव देवताः । हे अग्न्यादयः ! यूयम् एनम् उपनीयमानं 'सुमर्त्यं' शोभनमनुष्यं 'प्रयुयोतन' प्रकर्षेण मिश्रयत अस्माभिः सह इत्येतत् प्रार्थ्यते । तथा प्रयुयोतन यथा अनेन ब्रह्मचारिणा 'आगन्त्रा' आगमनशीलेन वयं 'समगन्महि' सङ्गच्छेमहि ; किञ्च 'अरिष्टाः' अविघ्नाः 'सञ्चरेमहि' अनेन ब्रह्मचारिणा सह । तथा अस्माभिः सह 'स्वस्ति' कल्याणेन अयं ब्रह्मचारी 'सञ्चरतात्'[2] । समगन्महि इति "मन्त्रे घसह्वर"त्यादिना ( पा० २,४,८० ) च्लेर्लुक्, "म्वोश्च" ( पा० ८,२,६५ ) इति मस्य नत्वम् । प्रयुयोतन व्यवहितोपसर्गसम्बन्धः, "यु मिश्रणे" लोट्, शपः श्लुः, "तप्तनप्तनथनाश्च" ( पा० ७, १, ४५ ) इति मध्यमपुरुषबहुवचनस्य तनबादेशः ॥५२

**ब्रह्मचर्यमा गामुप मा नयस्व ॥५३**

यजुरिदम् आचार्यदैवतं माणवकवाचने विनियुक्तम् । हे गुरो ! 'ब्रह्मचर्यं' मैथुननिवृत्तिम् अहम् 'आगाम्' आगतवान् अस्मि यतः अतः 'मा' माम् 'उपनयस्व' ॥५३

**को नामासि ॥५४**

**असौ नामास्मि ॥५५**

आचार्यः पृच्छति—किन्नामा त्वम् असि । स पृष्टः सन् आह— 'असौ नामास्मि' देवदत्तनामाहमस्मीत्यर्थः ॥५४—५५

---

१ मै—चरता० ।

२ मै—चरतात् ।

**देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ ॥५६**

यजुरिदम् ; उपात्ता एव देवताः सवित्रश्विपूषाणः, माणवक-हस्तग्रहणे विनियोगः । हे 'असौ' देवदत्त ! 'ते' तव 'हस्तं' 'सवितुः' देवस्य 'प्रसवे' अभ्यनुज्ञाने सति 'अश्विनोः' देववैद्ययोः 'बाहुभ्यां' 'पूष्णः' च देवस्य 'हस्ताभ्याम्' अहमाचार्यः पाणिना 'गृह्णामि' ॥५६

**अग्निस्ते हस्तमग्रहीत् सविता हस्तमग्रहीदर्यमा हस्तमग्रहीन्मित्रस्त्वमसि कर्मणाग्निराचार्यस्तव ॥५७**

यजुरिदं गृहीतमाणवकहस्तस्य आचार्यस्य जपे विनियुक्तम् ; अग्न्यादय एव देवताः । हे ब्रह्मचारिन् ! यः अयं तव हस्तो मया गृहीतः तं पूर्वम् 'अग्निः' 'सविता' 'अर्यमा' च 'अग्रहीत्', अतः 'कर्मणा' गुरुशुश्रूषादिना 'मित्रः' प्रियहितकारी मम 'त्वम्' 'असि' । 'अग्निः' च भगवान् 'तव' गुरुः । मित्रः इति लिङ्गव्यत्ययेन पुंस्त्वम् ॥५७

**सूर्यस्यावृतमन्वा वर्तस्वासौ ॥५८**

सूर्यदैवतं यजुः आवर्तने विनियुक्तम् । हे 'असौ' देवदत्त ! 'सूर्यस्य' 'आवृतम्' आवर्तनम् 'अन्वावर्तस्व' । अयमर्थः—यावद् भानोरावर्तनं तावत् त्वमपि तिष्ठ ॥५८

**प्राणानां ग्रन्थिरसि मा विस्रसो[1]ऽन्तक इदं ते परि ददाम्यमुम् ॥५९**

नाभ्यन्तकौ देवते ; नाभिस्पर्शने विनियुक्तं यजुरिदम् । हे नाभे ! अस्य ब्रह्मचारिणः त्वं 'मा विस्रसः'[1] मा विस्रंसिष्यसि स्वस्थानात् न

1 मा—विस्र'

विचलिष्यसि। यः त्वं 'प्राणानां' देहधारकाणां 'ग्रन्थिः' प्रतिबन्धः 'असि'। हे 'अन्तक'! यम! 'इदम्' अस्य ब्रह्मचारिणः शरीरं 'अमुं' च ब्रह्मचारिणं 'ते' तव 'परिददामि' समर्पयामि। त्वयि समर्पित एषः रोग-जरा-मरणादिकं न अनुप्राप्नुयात् इति। विस्रसः इति स्रंसेर्लुङ्, पुषादित्वात् अङ्॥५९

अहुर[1] इदन्ते परि ददाम्यमुम् ॥६०

नाभ्युपरिदेशस्पर्शने विनियुक्तम् इदं यजुः वायव्यम्। आहुरि[2] नाम वायुः तस्य आमन्त्रणम्। हे 'अहुर'! शेषं पूर्ववत्। अहुरे इति छान्दसं ह्रस्वत्वम् ॥६०

कृशन इदं ते परि ददाम्यमुम् ॥६१

हृदयदेशस्पर्शने विनियुक्तम् आग्नेयं यजुः। कृशानुरग्निः, तस्यानुमन्त्रणम्[3]। हे 'कृशानो'! अग्ने! ह्रस्वत्वं पूर्ववत् ॥६१

प्रजापतये त्वा परि ददाम्यसौ ॥६२

दक्षिणस्कन्धस्पर्शने विनियुक्तं प्राजापत्यं यजुः। हे 'असौ'! ब्रह्मचारिन्! 'प्रजापतये' स्रष्ट्रे 'त्वा' त्वां 'परिददामि' ॥६२

देवाय त्वा सवित्रे परि ददाम्यसौ ॥६३

सव्येन पाणिना सव्यस्कन्धस्पर्शने विनियुक्तं सावित्रं यजुः ॥६३

ब्रह्मचार्यसौ ॥६४

ब्रह्मचारिसम्बोधने विनियुक्तं ब्रह्मचारिदैवतं यजुः ॥६४

---

1 प—अभुरे। 2 प—आभुरिः।

3 अंशोऽयं G—पुस्तकमात्रलभ्यः।

समिधमा धेहि ॥६५

अपो[1]ऽशान ॥६६

कर्म कुरु ॥६७

मा दिवा स्वाप्सोः ॥६८

प्रैष्ये विनियुक्तं यजुः। हे ब्रह्मचारिन्! अग्नौ 'समिधम्' काष्ठम् 'आधेहि' अग्निकार्यं कुरु। 'अपः'[2] 'अशान' प्राग्भोजनात् मन्त्रवज्जलं भक्षय। 'कर्म' गुरुशुश्रूषादिलक्षणम् 'कुरु'। तथा 'दिवा' दिवसे 'मा स्वाप्सीः' न स्वपिहि। एवमुक्तः प्रतिवक्ति ब्रह्मचारी ॐ बाढ़मिति[3] ॥६५—६८

इयं दुरुक्तात् परिबाधमाना

वर्णं पवित्रं पुनती न आगात्।

प्राणापानाभ्यां बलमाहरन्ती[4]

स्वसा देवी सुभगा मेखलेयम् ॥६९

त्रिष्टुबियं मेखलादेवता मेखलापरिधापने विनियुक्ता। ब्रह्मचारी ब्रूते! 'इयं' प्रत्यक्षा 'मेखला' मौञ्जी 'नः' अस्मान् 'आगात्'। किं कुर्वाणा? 'दुरुक्तात्' असम्बद्धप्रलापादितः 'बाधमाना' निवारयन्ती, 'वर्णं' ब्राह्मणादिकं 'पवित्रम्' अपि 'पुनती' पावयन्ती। तथा च स्मृतिः —"मातुर्यदग्रे जननं द्वितीयं मौञ्जीबन्धनम्" इति। पुनः किं कुर्वती? 'प्राणस्य अपानस्य' च वायोः 'बलं' वीर्यम् 'आहरन्ती'[4] आनयन्ती।

---

1 भा—आपो। 2 भा—आपः।

3 प—ओमिति बाढमिति। मै—ओं बाढमिति वा।

4 भा—प—॰वहन्ती।

प्राणापानयोरुपादानं प्राधान्यख्यापनार्थम्। तथा 'स्वसा' भगिनीव। "परार्थे प्रयुज्यमानाः शब्दाः सादृश्यं गमयन्ति"। 'देवी' पूज्या। 'सुभगा' सर्वलोककाम्या। प्राणापानाभ्याम् इति षष्ठ्यर्थे चतुर्थी॥६८

**ऋतस्य गोप्त्री तपसः परस्वी**
**घ्नती रक्षः सहमाना अरातीः।**
**सा मा समन्तमभि पर्येहि भद्रे**
**धर्तारस्ते मेखले मा रिषाम ॥७०**

हे 'भद्रे'! शोभने! 'मेखले'! या त्वं ब्रह्मचारिसम्बन्धिनः 'ऋतस्य' सत्यस्य 'गोप्त्री' पालयित्री, 'तपसो' ब्रह्मचर्यस्य 'परस्वी' सर्वस्वभूता, 'घ्नती रक्षः' रक्षांसि विनाशयन्ती, 'अरातीः' शत्रून् 'सहमाना' अभिभवन्ती। 'सा' एवम्भूता त्वं 'मा' मां 'समन्तं' समन्तात् 'अभिपर्येहि' आभिमुख्येन सर्वत आगच्छ वेष्टय इत्यर्थः। यथा 'ते' तव 'धर्तारः' वयं केनचित् 'मा रिषाम' मा हिंसिष्महि। अरातीः इति व्यत्ययेन शसः स्थाने जस्, "वा च्छन्दसि" ( पा० ६,१,१०६ ) इति पूर्वसवर्णः॥७०

**तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि।**
**धियो यो नः प्र चोदयात् ॥७१**

गायत्रीयं सवितृदेवता ; ऋषिर्विश्वामित्रः, जपे विनियोगः। 'तत्' अध्ययनं भगवतः 'सवितुः' 'देवस्य' दानादिगुणयुक्तस्य 'वरेण्यं' वरणीयं 'भर्गः' भजनीयं सवित्रापि सेव्यं 'धीमहि' चिन्तयामः। सः किम्भूतः सविता ? 'यः' 'नः' अस्माकं 'धियः' बुद्धीः स्नानाध्ययनदानहोमेषु 'प्रचोदयात्' प्रवर्तयेत्। उदिते हि भगवति सकलाभ्युदयलक्षणानि कार्याणि प्रवर्तन्ते। भर्गः इति भ्रजिधातोः कर्मणि

घञ्, व्यत्ययेन पुंस्त्वप्रथमैकवचने। धीमहि इति दधातेः धारणार्थस्य लिङ्, "बहुलं छन्दसि" (पा० २,४,७६) इति शपो लुक्, "घुमास्थागापा" (पा० ६,४,६६) इत्यादिसूत्रेणेत्वम्। प्रचोदयात् इति "चुद सञ्चोदने" चुरादिः लेट् तिप्, आट्, शप्, "इतश्च लोपः परस्मैपदेषु" (पा० ३,४,९७) इतीकारलोपः ॥७१

भूर्भुवः स्वरोम्[1] ॥७२

गायत्र्युष्णिगनुष्टुभश्छन्दांसि, अग्नि-वायु-सूर्या देवताः, जपे विनियोगः[2]। 'भूः' पृथिवी। 'भुवः' अन्तरीक्षम्। 'स्वः' द्यौः। 'ॐ' आत्मा। त्रैलोक्यात्मनः प्रतिपद्यस्व इति ॥७२

सुश्रव[3] सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवा देवेष्वेवमहं सुश्रव[3] सुश्रवा ब्राह्मणेषु भूयासम् ॥७३

पङ्क्तिरियं दण्डार्पणे विनियुक्ता; दण्डाग्नीदैवते। दण्डं गृह्णन् ब्रह्मचारी तम् अग्निञ्च प्रार्थयते।—शोभनं श्रवो यशो यस्य स सुश्रवाः, शृणोतेः कर्मणि "सर्वधातुभ्योऽसुन्" (उ० ४,८८), छान्दसः सकारलोपः। हे 'सुश्रव'! शोभनकीर्ते! 'यथा' 'त्वं' वेदधारणार्थज्ञानादिना लोके 'सुश्रवाः' प्रख्यातयशाः एवं माम् अपि 'सुश्रवसं' कुरु। यद्यपि अचेतने दण्डे वेदधारणादिकं न सम्भवति तथापि अधिष्ठातृदेवताभिप्रायेण अभिधीयते। एवम् अग्निं प्रार्थयते—हे 'अग्ने'! 'सुश्रव'! पुनरामन्त्रणेन दण्डात् अग्नेः सुश्रवस्त्वातिशयः ख्याप्यते। 'यथा' 'त्वं' 'देवेषु' मध्ये 'सुश्रवाः' 'एवं' मनुष्येषु 'अहं' 'सुश्रवाः' 'भूयासम्' ॥७३

---

1 मै—पुस्तके मूलमिदं मुद्रापितं नास्ति।

2 प—मै—भ—पुस्तकेषु छन्दोदैवतविनियोगोक्तिरियं मन्त्रव्याख्यानात् परतः सन्निवेशितास्ते।

3 आकरग्रन्थेषु "सुश्रवः" इति मुद्रापितः पाठः।

**अग्नये समिधमाहार्षं[1] बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस्येवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन धनेनान्नाद्येन समेधिषीय ॥७४**

यजुरिदम् आग्नेयं समिदाधाने विनियुक्तम्। ब्रह्मचारी ब्रूते— 'अहम् अग्नये समिधम्' 'आहार्षम्'[2] आहृतवान्। किम्भूताय? 'बृहते' महते, 'जातवेदसे' जातप्रज्ञानाय। हे 'अग्ने'! 'यथा त्वम्' अनया 'समिधा' 'समिध्यसि' दीप्यसे। 'एवम्' अनेन प्रकारेण 'अहम्' 'आयुषा' 'मेधया' बुद्ध्या 'वर्चसा' तेजसा 'प्रजया' पुत्रपौत्रादिरूपया 'पशुभिः' गवादिभिः 'ब्रह्मवर्चसेन' ब्राह्मणतेजसा 'धनेन' वित्तेन 'अन्नाद्येन' व्रीहियवादिना 'समेधिषीय' वृद्धिमाप्नुयाम्। समिध्यसि इति कर्मणि[3] लट्, यक्, व्यत्ययेन परस्मैपदम्, "अनिदिताम्०" ( पा० ६,४,२४ ) इत्यनुनासिकलोपः ॥ ७४

**अमृतोपस्तरणमसि ॥७५**

हे गण्डूषरूप जल! 'अमृतस्य' पञ्चयज्ञावशिष्टस्य अन्नस्य 'उपस्तरणम्' शय्येव त्वम् 'असि' ॥७५

**प्राणाय स्वाहा ॥७६**

**अपानाय स्वाहा ॥७७**

**समानाय स्वाहा ॥७८**

**उदानाय स्वाहा ॥७९**

---

1 प—भ—०महार्षं। 2 प—भ—महार्षम्।

3 क—कर्तरि व्यत्ययेन यक् परस्मैपदञ्च।

व्यानाय स्वाहा ॥८०

निगदा एते। पञ्च अमी वायवः शारीराः ॥७६—८०

अमृतापिधानमसि स्वाहा ॥८१

'अपिधानम्' आवरणम् आच्छादनमिति यावत् ॥८१

सविचे स्वाहा ॥८२

अग्नये स्वाहा ॥८३

सोमाय स्वाहा ॥८४

अग्नये स्विष्टकृते[1] स्वाहा ॥८५

शोभनं सम्यक्फलावाप्त्या इष्टं[1] यागं करोतीति 'स्विष्टकृत्'[1] ॥८२—८५

अग्ने व्रतपते व्रतमचारिषं तत् ते प्र ब्रवीमि तदशकम्। तेनारात् समिदमहमनृतात् सत्य-मुपागाम् ॥८६

वायो व्रतपते व्रतमचारिषं तत् ते प्र ब्रवीमि तदशकम्। तेनारात् समिदमहमनृतात् सत्यमुपा-गाम् ॥८७

सूर्य व्रतपते व्रतमचारिषं तत् ते प्र ब्रवीमि तद-शकम्। तेनारात् समिदमहमनृतात् सत्यमुपा-गाम् ॥८८

---

१ प—मै—"स्विष्टिकृते"। "शोभां"। "इष्टि"। "स्विष्टिकृत्"।

चन्द्र व्रतपते व्रतमचारिषं तत् ते प्र ब्रवीमि तदशकम्। तेनारात् समिदमहमनृतात् सत्यमुपागाम् ॥८९

व्रतानां व्रतपते व्रतमचारिषं तत् ते प्र ब्रवीमि तदशकम्। तेनारात् समिदमहमनृतात् सत्यमुपागाम् ॥९०

'आराद्' दूरत एव 'अनृतात्' 'सत्य'-रूपं व्रतम् 'इदं' 'समुपागाम्' समुपगतवान् अस्मि ॥८६—९०

येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मनोको मनोहाः खलो विरुजस्तनूदूषिरिन्द्रियहा अति[1] तान् सृजामि ॥९१

यजुरिदम् आग्नेयम् उदकाञ्जलित्यागे विनियुक्तम्। 'ये' 'अग्नयः' वक्ष्यमाणाः 'अप्सु' 'अन्तः' मध्ये 'प्रविष्टाः'। के पुनः ते? 'गोह्यः', 'उपगोह्यः', 'मनोकः', 'मनोहाः', 'खलः', 'विरुजः', 'तनदूषिः', 'इन्द्रियहा'। 'तान्' एतान् अष्टौ अग्नीन् जलदूषकान् 'अति[1]-सृजामि' त्यजामि ॥९१

यदपां घोरं यदपां क्रूरं यदपामशान्तमति[1] तत् सृजामि ॥९२

घोरादयो देवताः। 'अपां' सम्बन्धि 'यद्' 'घोरं' भीमम्, 'यत्' च 'क्रूरं' निष्ठुरम्, 'यत्' च 'अशान्तं' रुजाकरम् 'तत्' 'अति[1]सृजामि' ॥९२

---

१ आ—प—भ—चभि।

**यो रोचनस्तमिह गृह्णामि तेनाहं मामभि-षिञ्चामि ॥८३**

यजुरिदम् रोचनाग्निदैवतम् अभिषेके विनियुक्तम्। गोष्ठादिषु त्यक्तेषु 'यः' अन्यः 'रोचनाख्यः' अग्निः दीप्तिकरः 'तम्' अहम् 'इह' 'गृह्णामि'। ततः 'तेन' रोचनेन जलान्तर्वर्तिना 'अहं' 'माम्' आत्मानम् 'अभिषिञ्चामि' ।८३

किमर्थम् ?

**यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय वीर्यायान्नाद्याय रायस्पोषाय त्विष्या अपचित्यै ॥८४**

'रायस्पोषः' धनसमृद्धिः। 'त्विष्टिः' दीप्तिः। 'अपचितिः' पूजाप्राप्तिः ॥८४

**येन स्त्रियमकृणुतं येनापामृशतं[1] सुराम्।**
**येनाक्षानभ्यषिञ्चतं ये चेमां पृथिवीं महीम्॥**
**यद् वां तदश्विना यशस्तेन मामभिषिञ्चतम्॥८५**

षड़ष्टका महापङ्क्तिरियम्; अश्विनौ देवते। अश्विनौ देववैद्यौ सम्भूय कर्मणाम् अधिष्ठातारौ ब्रह्मचारिणा संस्तूय प्रार्थ्येते। हे 'अश्विना'! अश्विनौ! 'येन' कर्मणा युवाम् अपुष्पाख्यां 'स्त्रियम्' 'अकृणुतं' हिंसितवन्तौ, 'येन' च 'सुरां' मदिराम् 'अपामृशतं'[1] खण्डितवन्तौ, 'येन' 'अक्षान्' पाशकान् अपामृशतं[1], 'ये च' येन च इमां 'महीं' महतीम् 'पृथिवीम्' 'अभ्यषिञ्चतम्' अभिषिक्तवन्तौ शस्यप्ररोहणद्वारेण संवर्धितवन्तौ, एवम्भूतं 'यत्' 'वां' युवयोः 'यशः'

---

1 चा—क—प—भ—°मृषतम्।

शोभनं कर्म 'तेन' 'माम्' 'अभिषिञ्चतम्', यथा युवाभ्याम् अहम् अभिषिक्तः कृतकृत्यो भवामि। अश्विना इति "सुपां सुलुक्" (पा० ७,१,३९) इत्यादिना प्रथमाद्विवचनस्यालादेशः। ये चेमाम् इत्यत्र ये इति "इयाडियाजीकाराणामुपसंख्यानम्" (वा०—पा० ७,१,३९) इतीकारे कृते आद् गुणः ॥९५

उद्यन् भ्राजभृष्टिरिन्द्रो मरुद्भिरस्थात् प्रातर्यावभिरस्थात्। दशसनिरसि दशसनिं मा कुर्वा त्वा विशाम्या मा विश ॥ ९६

उद्यन् भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् सान्तपनेभिरस्थात्। शतसनिरसि शतसनिं मा कुर्वा त्वा विशाम्या मा विश ॥९७

उद्यन् भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात् सायंयावभिरस्थात्। सहस्रसनिरसि सहस्रसनिं मा कुर्वा त्वा विशाम्या मा विश ॥९८

चक्षुरसि चक्षुष्ट्वमस्यव मे पाप्मानं जहि।
सोमस्त्वा राजावतु नमस्तेऽस्तु मा मा हिंसीः ॥९९

मन्त्रचतुष्टयम् आदित्यदेवतम् उपस्थाने विनियुक्तम्; त्रीणि यजूंषि, शेषानुष्टुप्। परमैश्वर्ययोगात् 'इन्द्रः' आदित्यः 'उद्यन्' उदीयमानः 'मरुद्भिः' देवैः सह 'अस्थात्' स्थितवान्। किम्भूतैः? 'भ्राजभृष्टिभिः' भ्राज्यते इति भ्राजा भर्जनं, भृष्टिः दीप्तिः, भ्राजा भृष्टिः येषां ते तथोक्ताः तैः, अतिशयदीप्यमानैरित्यर्थः। न केवलं मरुद्भिः अस्थात् 'प्रातर्यावानः' देवविशेषाः तैश्च सह 'अस्थात्'। किञ्च त्वं

'दशसनिः असि', दशानां संविभक्ता असि। अतः 'मा' मामपि 'दशसनिं' कुरु। अहं 'त्वा' त्वाम् 'आविशामि' अर्थित्वेन उपगच्छामि। अतः त्वमपि 'मा' माम् 'आविश' अभिमतफलदानेन अभिमुखो भव। प्रातर्यावभिः इति "या प्रापणे" "आतो मनिन्‌क्वनिब्वनिपश्च" (पा० ३,२,७४) इति वनिप्। दशसनिः इति "वन सन सम्भक्तौ" "छन्दसि वनसनरक्षिमथाम्" (पा० ३,२,२७) इति इन्। आविशामि इति आविश इति व्यवहितोपसर्गसम्बन्धः ॥८६

'सान्तपनाः' देवविशेषाः। "बहुलं छन्दसि" (पा० ७,१,१०) इति भिस ऐस् न भवति ॥८७

'सायंयावानः' देवविशेषाः ॥८८

हे सूर्य ! त्वं 'मे' मम 'पाप्मानम्' अनिष्टम् 'अवजहि'। यः 'त्वं' त्रैलोक्य-'चक्षुः' 'असि' तथा लोकस्यापि 'चक्षुः' दर्शनशक्तिः त्वम् 'असि'। किञ्च 'सोमः' ब्राह्मणानाम् ओषधीनाञ्च राजा 'त्वा' त्वाम् 'अवतु' आप्याययतु देवानाम् अन्नं चन्द्र इति कृत्वा। एवम्भूताय 'ते' तुभ्यं 'नमः' 'अस्तु'। 'मा' मां 'मा हिंसीः'। चक्षुष्टम् इति "युष्मत्तत्ततक्षुष्व न्तःपादम्" (पा० ८,३,१०३) इति षत्वम्, टुत्वम्। अवजहि व्यवहितोपसर्गसम्बन्धः ॥८९

**उदुत्तमं वरुण पाशमस्म-**
**दवाधमं वि मध्यमं श्रथाय।**
**अथादित्य व्रते वयं**
**तवानागसो अदितये स्याम ॥१००**

त्रिष्टुबियम्; शुनःशेप ऋषिः, वरुणो देवता, मेखलामोचने विनियोगः। अनया त्रिष्टुभा शुनःशेप ऋषिः त्रिभिः पाशैर्बद्धः तद्विमोचाय वरुणं प्रार्थयामास।—हे 'वरुण'! 'अस्मत्'-सकाशात्

'उत्तमम्' कण्ठावस्थितं 'पाशम्' बन्धनम् 'उच्छ्रथाय' ऊर्ध्वम् उत्तानय। 'अधमं' पादावस्थितम् 'अवश्रथाय' अधस्तात् अवतारय। 'मध्यमं' कटिदेशावस्थितं 'विश्रथाय' तत्रस्थमेव शिथिलीकुरु। अथ पाशावमोचानन्तरं शुनःशेपेन वरुणः प्रार्थ्यते—हे 'आदित्य'! अदितिपुत्र वरुण! 'अथ' पाशमोचानन्तरं 'तव' 'व्रते' परिचर्यालक्षणे 'वयम्' 'अनागसः' अनपराधाः सन्तः 'स्याम' भवेम। न केवलं तव, 'अदितये' अदितेश्च त्वन्मातुः। श्रथाय इति श्रथ्नातेर्लोट् सिप्, "छन्दसि शायजपि" (पा० ३,१,८४) इति शायच्। उत् अव वि इत्येते व्यवहिताः। आदित्येति "दित्यदित्यादित्य०" (पा० ४,१,८५) इति ण्यः॥१००

## श्रीरसि मयि रमस्व ॥१०१

श्रीदैवतं स्रग्बन्धने विनियुक्तं यजुः। हे माले! या त्वं 'श्रीः' लक्ष्मीः 'असि', सा 'मयि' 'रमस्व' अवस्थानं कुरु॥१०१

## नेत्र्[1] स्थो नयतं माम् ॥१०२

उपानद्‌दैवतं यजुः तत्परिधाने विनियुक्तम्। हे उपानहौ! यतो युवां 'नेत्र्' नयनशक्तिप्रदे 'स्थः' भवथः, अतः 'माम्' 'नयतम्' इष्टप्राप्तये देशान्तरं प्रापयतम्॥१०२

## गन्धर्वोऽस्युप मा अव[2] ॥१०३

दण्डग्रहणे विनियुक्तं दण्डदैवतम् इदं यजुः। हे दण्ड! यतः त्वं 'गन्धर्वः' आदित्यः 'असि', रक्षणकर्ता वा असि, ततः 'मा' माम् 'उपाव' समीपे रक्ष। "अव रक्षणे" व्यवहितोपसर्गसम्बन्धः।१०३

---

1 "नेत्र्यौ" इति आकरग्रन्थेषु मुद्रापितः पाठः।

2 "गन्धर्वोऽस्युपाव उप मामव" इत्याकरग्रन्थेषु।

**यच्चमिव चक्षुषः प्रियो वो भूयासम् ॥१०४**

यजुरिदम् आचार्यपरिषदोर्वीक्षणे विनियुक्तम् ; तौ एव देवते। हे आचार्य परिषत्समेत! 'वः' युष्माकं 'चक्षुषः प्रियः' अहं 'भूयासम्'। क इव? 'यच्चमिव', यथा यक्षः दर्शनीयतया सर्वलोकस्य वल्लभः, तथा अहमपि युष्मच्चक्षुषाम् इत्यर्थः। यक्षम् इति लिङ्ग-व्यत्ययेन नपुंसकत्वम्। चक्षुषः इति जातावेकवचनम् ॥१०४

**ओष्ठापिधाना नकुली दन्तपरिमितः पविः।**
**जिह्वे मा विह्वलो वाचं चारु माद्येह वादय ॥१०५**

अनुष्टुबियं जिह्वादेवता मुखवायुस्पर्शने विनियुक्ता। स्नातकेन जिह्वा प्रार्थ्यते।—हे 'जिह्वे'! 'इह' प्रस्तुते कर्मणि 'अद्य' त्वं 'मा विह्वल' मा चरिष्यसि। 'उ'-शब्दः पादपूरणे। 'मा' मां 'चारु' शोभनं यथा स्यात् तथा 'वाचम्' 'वादय'। यतः त्वं 'ओष्ठापिधाना' ओष्ठौ अपिधानम् आवरणं यस्याः सा। तथा 'नकुली' चञ्चलस्वभावा। तथा 'दन्तपरिमितः पविः' दन्तावरणो[1] वज्र इव त्वम् ॥१०५

**वनस्पते वीड्वङ्गो हि भूया**
**अस्मत् सखा प्रतरणः सुवीरः।**
**गोभिः सन्नद्धो असि वीडय-**
**स्वास्थाता ते जयतु जेत्वानि ॥१०६**

त्रिष्टुबियं रथदेवता रथारोहणे विनियुक्ता। रथः प्रार्थ्यते।—वनस्पतिविकारत्वाद् वनस्पतिशब्देन रथ एव उच्यते। हे 'वनस्पते'! रथ! त्वं 'वीड्वङ्गः' विभूनि दृढानि महाभारसहानि अङ्गानि चक्र-

1 भा—"दन्तावधारणी"।

कूबरप्रभृतीनि यस्य सः तथा 'भूयाः'। 'अस्मत्सखा' अस्माकं मित्ररूपो भूयाः। तथा 'प्रतरणः' प्रकर्षेण तरति दुर्गाणि येन स तथा। तथा 'सुवीरः' सुसारथिः। तथा 'गोभिः' वृषभैः 'सन्नद्धः असि' संयुक्तः असि। यतः त्वम् एवम्भूतः अतः अस्मान् अपि 'वीड़यस्व' सुदृढ़ावयवान् कुरु। किञ्च 'ते' तव 'आस्थाता' आरोढ़ा 'जेत्वानि' जेतव्यानि द्विषद्वृन्दानि 'जयतु'। वीडुङ्गः इति विडुशब्दस्य छान्दसं दीर्घत्वम्। एवं वीड़यस्व इत्यत्र। जेत्वानि इति "जि जये" "कृत्यार्थे तवै-केन्-केन्य-त्वनः" ( पा० ३,४,१४ ) इति त्वन् प्रत्ययः[1] ॥१०६

वास्तोष्पते प्रतिजानीह्यस्मान्
सुवेशो[2]ऽनमीवो भवा नः।
यत्ते महे प्रति तन्नो जुषस्व
शन्नो भव द्विपदे शञ्चतुष्पदे ॥१०७

त्रिष्टुबियम्; वशिष्ठ ऋषिः; वास्तोष्पतीया नवगृहप्रवेशे चरुहोमे विनियुक्ता। हे 'वास्तोष्पते'! इन्द्र! त्वं 'अस्मान् प्रतिजानीहि' जुह्वतः अस्मान् अवबुध्यस्व। तथा सति त्वम् 'अनमीवः' आरोग्यकरः, 'सुवेशः' शोभनप्रवेशः 'भव' 'नः' अस्माकम्। किञ्च 'यत्' 'ते' तव 'महे' उत्सवे पूजादिकं कुमः 'तत्' 'नः' अस्माकं 'प्रतिजुषस्व' प्रतीच्छ। एवञ्च प्रीणितः त्वं 'नः' अस्माकं सम्बन्धिनि 'द्विपदे' 'चतुष्पदे' च 'शं' कल्याणरूपो भव। अमीवः इति रोग उच्यते। भवा इति "द्व्यचोऽतस्तिङः" ( पा० ६,३,१३५ ) इति दीर्घः ॥१०७

1 G—पुस्तके इतः परम् 'इति सप्तमः खण्डः' इति प्रकरणसमाप्तिवचनं पठ्यते।

2 'स्वावेशो' इत्याकरग्रन्थेषु मुद्रापितः पाठः।

**कया नश्चित्र० ॥ कस्त्वा सत्यः० ॥ अभी षु णः०[1]**

॥१०८-११०

गायत्रीत्रयमिदं पायसचरुहोमे विनियुक्तम्। शान्तिकर्मणि (२,२६-२८) व्याख्यातम् ॥१०८—११०

इति भट्ट-श्रीगुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये चतुर्थं खण्डम्।

---

**शन्न आपो धन्वन्याः शमनः सन्तु नूप्याः।**
**शन्नः समुद्रिया आपः शमनः सन्तु कूप्याः ॥१**

'धन्वन्याः आपः' मरुदेशभवानि जलानि 'शं' कल्याणं 'नः' अस्माकं कुर्वन्तु इति शेषः। तथा 'नूप्याः' अनूपदेशभवाः आपः 'शमनः सन्तु' शं कल्याणम् अनन्तीति शमनः कल्याणप्रापिकाः सन्तु। तथा 'समुद्रियाः' समुद्रभवाः 'आपः' 'नः' अस्माकं 'शं' कुर्वन्तु। तथा 'कूप्याः' कूपभवाः आपः 'शमनः सन्तु'। धन्वन्याः, नूप्याः, कूप्याः इति "भवे च्छन्दसि" (पा० ४,४,११०) इति यत्। नूप्याः इत्यकारलोपः छान्दसः। समुद्रियाः इति समुद्राद् घः[2] ॥१

**द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।**
**पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥२**

'आपः' जलानि 'मा' माम् 'एनसः' पापात् 'शुन्धन्तु' पावयन्तु पवित्रीकुर्वन्तु। "शुन्ध शुद्धौ"। अत्र दृष्टान्तमाह—'द्रुपदादिव मुमु-

---

1 प—भ—पुस्तकयोरितः परं २य-खण्डान्तःपतिता मन्त्राः पठ्यन्ते ; ततश्च "इति प्रथमं काण्डं समाप्तम्" इति पुष्पिका।

2 भा—समुद्रादियः। मे—समुद्राद यः।

चानः’ यथा ‘द्रुपदात्’ वृक्षमूलात् वृक्षमूलं प्राप्य ‘स्विन्नः’ घर्मार्त्तः ‘मुमुचानः’ मुक्तो भवति, यथा च ‘स्नातः’ कृतस्नानः ‘मलात्’ वस्रादेः मुक्तो भवति, यथा च ‘आज्यं’ घृतं ‘पवित्रेण’ आज्यसंस्कारविधिना ‘पूतं’ भवति तथा मामपि आपः पावयन्तु इति आशंसा वाक्यार्थः। मुमुचानः इति “मुच्लृ मोचणे” लिट् कानच् ॥२

ॐ भूः। ॐ भुवः। ॐ स्वः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यम् ॥३

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥४

आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥५

ॐकारस्य ऋषिः ब्रह्मा[1], छन्दो गायत्री, देवता अग्निः, विनियोगः सर्वकर्मारम्भे।

सप्तानां व्याहृतीनाम् ऋषिः प्रजापतिः, गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती एतानि क्रमेण छन्दांसि, अग्नि-वायु-सूर्य-बृहस्पति-वरुणेन्द्र-[2]विश्वेदेवाः देवताः।

तदिति ऋचस्तु विश्वामित्रः ऋषिः, छन्दः गायत्री, देवता सविता।

आपो ज्योतिः यजुः, प्रजापतिः ऋषिः, ब्रह्म-वाय्वग्नि-सूर्याः देवताः। सर्वत्र विनियोगः प्राणायामे।

“सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते॥”

इति याज्ञवल्क्यवचनात् प्राणायामे ईदृशः पाठः। व्याहृतयो भूरादयः

---

1 पा—ब्रह्म ऋषिः। 2 पा—बृहस्पतीन्द्रवरुण०।

सप्त। प्रणव: ओँकार:। तदिति गायत्री। आपोज्योतिरित्यादि शिर:।

'तत्' तस्य 'सवितु:' सर्वभावाणां प्रसवितु: 'देवस्य' दीप्ति-क्रीड़ादि-युक्तस्य[1] 'भर्ग:' भर्ग तेज: 'धीमहि' चिन्तयाम:। अत्र यद्यपि तदिति पदं[2] विशेषणं नास्ति तथापि यच्छब्दप्रयोगादेव तच्छब्द-प्रयोगो लभ्यते।[3]

'य:' भर्ग:[4] 'न:' अस्माकं 'धिय:' बुद्धी: 'प्रचोदयात्' प्रेरयति धर्मार्थ-काममोक्षेषु नियोजयति। किम्भूतं भर्ग चिन्तयाम:? 'वरेण्यं' वरणीयं जन्ममृत्युदु:खादिभीरुभि: ध्यानेन उपासनीयम् इत्यर्थ:।[5]

अत्र यद्यपि सवितुर्भर्ग: इति सवितृभर्गयो: भेद: प्रतीयते तथापि परमार्थचिन्तायाम् आदित्यभर्गयो: अभेद एव।

एवं गायत्र्या भर्गस्य माहात्म्यम् उपदर्श्य पुनस्तस्यैव महाप्रभावत्वं सप्तव्याहृतिभि: विशेषणभूताभि: अभिधीयते। किम्भूतो भर्ग:? भूरादिसप्तलोकप्रकाशन:। 'भू:' पृथिवी, 'भुव:' अन्तरीक्षं, 'स्व:' द्यौ:, 'मह:' महर्लोक:, 'जन:' जनलोक:, 'तप:' तपोलोक:, 'सत्यं'

---

1 मै—सम्बन्धि तन्मण्डलवर्ति इत्यधिकम्।

2 प—भ—तमिति०। मै—तस्येति सवितृ०।

3 भा—तथा च योगियाज्ञवल्क्य:—

यच्छब्देन तु तच्छब्दो बोध्यश्च सततं बुधै:।
उदाहृते तु यच्छब्दे तच्छब्द: स्यादुदाहृत:॥ इत्यधिकम्।

4 मै—सविता।

5 भा—मै—अत्राभियुक्तश्लोक:—

यो देव: सवितास्माकं धियो धर्मादिगोचरा:।
प्रेरयेत् तस्य तद् भर्गस्तद्वरेण्यमुपास्महे॥

भर्ग: इति भ्रस्जिरसुन्नन्तो न्यङ्क्वादि:। इत्यधिकम्।

सत्यलोकः, एवम् उपर्युपरिक्रमेण अवस्थितान् सप्त लोकान् अभिव्याप्य अवतिष्ठमानो भर्गः एतान् सप्त लोकान् प्रकाशयतीत्यर्थः । सप्त लोकाः पुनः सप्तव्याहृतयः एव । अत्र च "स्वरव्यतीङ्कृतं ब्रह्म" इति प्रत्यवायपरिहाराय प्रतिव्याहृति प्रणवानां प्रयोगः ।

एवमादित्यस्वरूपस्य भर्गस्य प्रभावमुपवर्ण्य पुनस्तस्यैवोत्कर्षः शिरोमन्त्रेण प्रतिपाद्यते । पुनरपि कीदृशो भर्गः ? 'ब्रह्म' ब्रह्मस्वरूपः भर्ग एव परमात्मभूत इत्यर्थः । तथा 'ज्योतिः' तेजःस्वरूपः मणि-पाषाण-धातूनां तेजोरूपेण संस्थितः । तथा 'रसः', तृणगुल्मौषधिस्थावरेषु स रसरूपेण वसतीत्यर्थः । एतेन अखिलस्थावर-जङ्गममेव तेन व्याप्तमिति । न केवलमयं भर्गः परमात्मस्वरूपतयैव जङ्गमेषु वर्तते अपि तु अमृतनामा चेतनात्मा[1]ऽपि स एव भर्गः इति प्रदर्श्यते 'अमृतम्' इति । अमृतनामा ज्योतिर्मयः चेतनात्मा[1] प्राणिनां हृदये यो वसति सोऽपि भर्ग एव । तथाहि—प्राणिनां हृदये सूर्यमण्डलम्, तन्मध्ये सोममण्डलम् तन्मध्ये तेजः, तेजोमध्ये सत्यं, सत्यमध्ये परमात्मा, तत्र सोममण्डलस्य मध्ये हुताशना वसति, स एवामृतनामा चेतनात्मा[1] । तदेवंस्वरूपः अमृतनामा चेतनात्मा[1]ऽपि तस्य परमात्मस्वरूपस्य भर्गस्यैव मूर्तिः इति प्रतिपादितम् । किञ्च यत्र जले त्रैलोक्यमिदम् उत्पन्नं तदपि भर्ग एव इति दर्शयति 'आपः' इति । कारणजलस्वरूपो भर्ग एव । तथा ब्रह्म-विष्णु-रुद्रमूर्तिभेदेन सृष्टिस्थितिप्रलयप्रवर्तयिता भर्ग एव इति प्रदर्शयितुं विशेषणं 'भूर्भुवःस्वः' इति । एतद्व्याहृतित्रयं सत्त्वरजस्तमोमयब्रह्म-विष्णु-रुद्रात्मकम् इति । इत्थं सचराचरत्रैलोक्यमेव भर्गस्वरूपम् । ततश्च परब्रह्मस्वरूपित्वं तस्य प्रतिपादितम् । तदेवं वाक्यार्थः—यः यथाभूतो भर्गः

---

1 प—मै—चेतात्मा ।

अस्मान् प्रेरयति स एव जलज्योतीरसामृत-भूरादिलोकत्रयात्मक-सचराचरस्वरूपब्रह्मविष्णुमहेश्वरसूर्यादिनानादेवतामय: परमब्रह्म-स्वरूप: भूरादिसप्तलोकान् प्रकाशयन् मदीयं जीवात्मकं ज्योतीरूपं सत्याख्य' सप्तमं लोकं ब्रह्मस्थानं नीत्वा आत्मन्येव ब्रह्मज्योतिषा सह एकभावं करोतु इति जपन् प्राणायामं कुर्यात् ॥३—५

**सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्य: पापेभ्यो रक्षन्ताम् । यद्रात्र्या[1] पापमकार्षं[2] मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अह[3]स्तदवलुम्पतु । यत् किञ्चिद्दुरितं मयि इदमह[4]ममृतयोनौ सूर्ये ज्योतिषि परमात्मनि[5] जुहोमि स्वाहा ॥६**

'मा' मां 'रक्षन्ताम्' पालयन्तु[6] । के ? 'सूर्यश्च', 'मन्युश्च' मन्युर्यज्ञ:, 'मन्युपतयश्च' यज्ञपतय:[7],—एते सर्वे मामवन्तु । केभ्य: ? 'पापेभ्य:' । किम्भूतेभ्य: ? 'मन्युकृतेभ्य:' असाङ्गयज्ञकृतेभ्य: । मन्यु: क्रोधो वा, क्रोधपतय: इन्द्रियाणि, क्रोधकृतेभ्य: पापेभ्य: रक्षन्ताम् इति । किमुक्तं स्यात् ? मम एतादृश: क्रोधो मा भवतु येन अहम् अकार्यं करोमीति । किञ्च 'यत्' पापं 'रात्र्या' 'अकार्षम्' । केन ? 'मनसा', 'वाचा', 'हस्ताभ्यां', 'पद्भ्याम्', 'उदरेण', 'शिश्ना' शिश्नेन, 'तत्' पापम् 'अह:' दिवस: 'अवलुम्पतु' खण्डयतु । 'यत् किञ्चित्' 'मयि' मदाश्रितं 'दुरितं' पापं तत् 'इदम्'

---

1 क—यद्राचिया । 2 क—०कारिषं । 3 क—रात्रिस्तदित्याकरपाठ: ।
4 ०मह मा० इत्याकरग्रन्थेषु मुद्रापित: पाठ: । 5 पदमिदमाकरे न मुद्रापितम् ।
6 इदं मे—पुस्तके न मुद्रापितम् । 7 मा—इन्द्रादय: ।

'अहं' 'सूर्यं' 'जुहोमि'। किम्भूते ? 'ज्योतिषि' हृत्पद्ममध्यस्थित-प्रकाशस्वरूपे, 'परमात्मनि' परमात्मस्वरूपे, 'अमृतयोनौ' चेतनात्मकारणे[1], पानीयरूपेण तत् पापं जुहोमि 'स्वाहा' सुहुतं भवतु। शिश्ना इति "सुपां सुलुक्" ( पा० ७,१,३९ ) इत्यादिना तृतीयैकवचनस्य डादेशः ॥६

आपः पुनन्तु पृथिवीं पृथिवी[2] पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्।
यदुच्छिष्टमभोज्यञ्च[3] यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो असताञ्च प्रतिग्रहं स्वाहा ॥७

'आपः' 'पृथिवीं' 'पुनन्तु' पवित्रां कुर्वन्तु। सा 'पृथिवी' अद्भिः 'पूता' सती 'मां' चैत्रज्ञं 'पुनातु'। न केवलम् आपः पृथिवीं पुनन्तु अपि तु 'ब्रह्मणः' 'पतिम्' आश्रयभूतं परमात्मानम् अपि 'पुनन्तु'। तद् 'ब्रह्म' 'पूता' पूतं सत् 'मां' 'पुनातु'। अत्र पृथिवीपदेन पार्थिव-देहो विवक्षितः। ततश्च आपः पृथिवीं पुनन्तु पार्थिवं देहम् इमं पावयन्तु, देहपावनद्वारा च मां जीवात्मस्वरूपं पुनन्तु। कुत्र ? 'यत्' 'उच्छिष्टम्' अपावनम्, 'अभोज्यं' गर्हितभोजनं, 'यद् वा' यदपि 'दुश्चरितम्' असदाचरणम्, 'असताम्' अप्रतिग्राह्याणां 'प्रतिग्रहञ्च' तत् 'सर्वं' सर्वत्र माम् आपः पुनन्तु। इत्थम् आशास्य या आपः आचम्यन्ते ताः 'स्वाहा'। आपः आचमनेन मदीयदेहपावनपूर्वकम् उच्छिष्टादिरूपे पापे मां पावयन्तु इत्याशंसा वाक्यार्थः। ब्रह्मणस्पतिः इति व्यत्ययेन द्वितीयार्थे प्रथमा। पूता इति "सुपां सुलुक्"

---

1 मै—चेतात्मकारणे। 2 मा—प—भ—मै—पृथ्वी। 3 मै—०भोज्यम्।

( पा० ७,१,३९ ) इत्यादिना सोर्डादेशः। प्रतिग्रहम् इति व्यत्ययेन नपुंसकता। सर्वम् इति सप्तम्याः सुः ॥७

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षं[1] मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रि[2]स्तदवलुम्पतु। यत् किञ्चिद्दुरितं मयि इदमह[3]ममृतयोनौ सत्ये ज्योतिषि परमात्मनि[4] जुहोमि स्वाहा ॥८

'अह्ना' दिवसेन 'यत्' 'पापम्' 'अकार्षम्' 'तत्' 'रात्रिः' 'अवलुम्पतु'। 'इदं' जलं 'ज्योतिषि' 'सत्ये' सत्यस्वरूपे 'जुहोमि'। शेषः उक्तार्थः। प्रातः सूर्यस्य दीप्यमानत्वात् सायञ्च अग्नेर्भासमानत्वात् यथायोगं सूर्याग्नी प्रार्थ्येते ॥८

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे ॥९

यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥१०

तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥११

एताः तिस्रो गायत्र्यः सिन्धुद्वीपऋषिदृष्टा अब्दैवताः

---

1 क—०कारिषं।　　2 अहस्तदित्याकरपाठः।

3 ०महं मा० इत्याकरग्रन्थेषु मुद्रापितः पाठः।

4 पदमिदमाकरे न मुद्रापितम्।

मार्जने विनियुक्ताः[1]। हे 'आपः'! 'हि' यस्मात् यूयं 'मयोभुवः स्थ' मयः सुखं तस्य भावयितारः भवथ, 'ता' तस्मात् 'नः' अस्मान् 'ऊर्जे' अन्नाय 'दधातन' स्थापयत। किञ्च 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनीयाय अभिधातु 'दधातन'। अयमर्थः—हे आपः! यतो यूयं सुखं प्रापयथ तस्मात् अस्मान् ऐहिकेन अन्नाद्येन आमुष्मिकेण च महारमणीयदर्शनेन परब्रह्मणा संयोजयत इत्यस्य प्रार्थना। हि छा इति अस्तेर्लट् मध्यमपुरुषबहुवचनं "पूर्वपदात्" (पा० ८, ३, १०६) इति षत्वम्, "अन्येषामपि दृश्यते" (पा० ६,३,१३७) इति दीर्घः। ता इति तच्छब्दात् ङसेः "सुपां सुलुक्" (पा० ७,१,३९) इत्यादिना डादेशः। दधातन इति "तप्तनप्तनथनाश्च" (पा० ७,१,४५) इति तनबादेशः। महे इति टिलोपश्छान्दसः। रणाय इति रमणीयशब्दस्य रणादेशः पृषोदरादित्वात् छन्दसि। चक्षसे इति चक्षिङः तुमर्थे असेन्[2] ॥९

हे आपः 'वः' युष्माकं 'यः' 'रसः' निर्यासः 'शिवतमः' अत्यन्तकल्याणरूपः 'तस्य' रसस्य 'इह' 'नः' अस्मान् 'भाजयत' भागिनः कुरुत, रसेन सम्बद्धान् अस्मान् कुरुत। किम्भूताः यूयम्? 'उशतीः' इच्छावत्यः स्नेहलाः 'मातर इव'। अयमर्थः—यथा सस्नेहाः मातरः पुत्रान् स्तन्यरसभागिनः कुर्वन्ति, तथा यूयम् अस्मान् कल्याणकारिरससम्बद्धान् कुरुत इत्यस्य प्रार्थना। उशतीः इति 'वश कान्तौ' शतृप्रत्ययः, "ग्रहिज्या" (पा० ६,१,१६) इत्यादिना सम्प्रसारणम्, "उगितश्च" (पा० ४,१,६) इति ङीप्, "वा छन्दसि" (पा० ६,१,१०६) इति पूर्वसवर्णः ॥१०

---

1 मी—आपो हिष्ठेत्यादित्र्यस्य सिन्धुद्वीप ऋषिः गायत्रीच्छन्दः आपो देवताः मार्जने विनियोगः। भा—प—"इयमेका वक्ष्यमाणे च द्वे" इत्यधिकम्।

2 भा—तुमर्थे असुन्नन्तात् चतुर्थी।

हे 'आपः !' 'वः' युष्माकं 'तस्मै' तस्मिन् रसे 'अरं' अलं पर्याप्तं 'गमाम' तत्र रसे तृप्तिं गच्छाम इत्यर्थः। किञ्च तत्र रसे 'नः' अस्मान् 'जनयथ' तद्रसभोक्तृत्वेन अस्मान् परिकल्पयथ। 'यस्य' रसस्य 'क्षयाय' क्षये स्थाने 'जिन्वथ' प्रीणयथ ब्रह्मादिस्तम्बपर्यन्तं जगत् इति शेषः। अयमर्थः—युष्माकं यस्य रसस्य स्थाने जगत् यूयं प्रीणयथ तस्य विषये वयं तृप्तिं गच्छामः, यूयञ्च नः तद्रसभोगं जनयथ। तस्मै इति क्षयाय इति सप्तम्यर्थे चतुर्थी। गमाम इति प्रार्थनायां लिङर्थे लेट् आट्। जिन्वथ इति जिविधातोर्लट् मध्यमपुरुषबहुवचनम्। जनयथा इति पूर्ववद्दीर्घः। अथवा हे आपः! वः युष्माकं यस्य रसस्य क्षयस्य जगदाधारभूतस्य यूयं जिन्वथ प्रीणयथ, तस्मै रसाय वयम् अरं शीघ्रं गच्छामः, ततश्च नः अस्माकं यूयमपि तं रसं जनयथ ॥११

ऋतञ्च सत्यञ्चाभीद्धात् तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद् विश्वस्य मिषतो वशी॥
सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥१२

एताः तिस्रः अनुष्टुभः अघमर्षणर्षिदृष्टाः भाववृत्तदेवताः अश्वमेधावभृथे विनियुक्ताः[1]। 'ऋतं' 'सत्यम्' इति परं ब्रह्म उच्यते। तथा च श्रुतिः—"ऋतमेकाक्षरं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इति। आसीत् इत्यध्याहार्यम्। तदयमर्थः—ऋतञ्च सत्यञ्च आसीत् पर-

1 मै—ऋतञ्चेत्यादित्रयस्य सिन्धुद्वीप ऋषिः अनुष्टुप्छन्दः भाववृत्तो देवता जपे विनियोगः।

ब्रह्ममात्रम् आसीत् ; एतेन महाप्रलयावस्था प्रतिपादिता ; महाप्रलयसमये केवलं ब्रह्ममात्रम् आसीत् इत्यर्थः । 'ततः' महाप्रलयावस्थायामेव 'रात्र्यजायत' रात्रिः समुत्पन्ना, सकलम् अन्धकारमयम् आसीदित्यर्थः । तथा च स्मृतिः—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।" इति । 'ततः' प्रलयावसाने सृष्ट्यारम्भसमये 'तपसः' अदृष्टबलात् 'समुद्रः' 'अध्यजायत' । किम्भूतः ? 'अर्णवः' पानीययुक्तः, सकलजगदुत्पत्तिनिमित्तं जलराशिः उत्पन्न इत्यर्थः । तथा च स्मृतिः—"अप एव ससर्जादौ तासु बीजमवासृजत्" इति । किम्भूतात् तपसः ? 'अभीद्धात्' अभि सर्वतोभावेन समृद्धात् लब्धवृत्तेः ; प्रलयसमये हि हि निरुद्धवृत्ति अदृष्टं भवति । ततः 'समुद्रात् अर्णवात्' 'धाता' स्रष्टा अजायत । किम्भूतः ? 'मिषतः' प्रकटीभवतः 'विश्वस्य" 'वशी' प्रभुः, महाप्रलये विलुप्तस्य जगतः निर्माणे प्रभुः इत्यर्थः । स 'धाता' 'यथापूर्वं' यथाक्रमं 'सूर्याचन्द्रमसौ' अकल्पयत् । किम्भूतौ ? 'अहोरात्राणि विदधत्' अहोरात्रान् कुर्वाणौ, सूर्य एव हि दिवसं करोति चन्द्रमाश्च रात्रिम् । ततः सूर्यचन्द्रयोरुत्पत्त्यनन्तरं 'संवत्सरः' 'अजायत', सूर्यचन्द्रोत्पत्तौ रात्रिन्दिवविभागकल्पनया संवत्सरसम्भवः । 'अथो' अनन्तरं 'दिवं' स्वर्गं, 'पृथिवीं' महीं, 'अन्तरिक्षम्' आकाशं, 'स्वः' नक्षत्रलोकोपरिस्थं स्वर्गलोकं स एव धाता अकल्पयत्, चराचरात्मकसकललोकं स एव धाता सृष्टवान् । रात्रीति "रात्रेश्चाजसौ" (पा० ४,१,३१) इति ङीप् । अर्णवः इति "अर्णसो लोपश्च" (वा०—पा० ५,२,१०९) इति मत्वर्थे वः सकारलोपश्च । विदधत् इति द्विवचनस्य "सुपां सुलुक्०" ( पा० ७,१,३९, ) इति लुक् ॥१२

उदुत्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्यम् ॥१३

'त्यं' तं 'देवं' 'केतवः' रश्मयः 'उद्वहन्ति'। किम्भूतम्? 'जातवेदसं' तेजोमयम्। किमर्थम् उद्वहन्ति? 'विश्वाय' विश्वस्य 'दृशे' दर्शनाय। अयमर्थः—तेजःस्वरूपं सूर्यं विश्वप्रकाशनाय रश्मयः उद्वहन्ति। उदु इत्युकारः सम्बोधने। दृशे इति "दृशे विख्ये च" (पा० ३,४,११) इति तुमर्थे केप्रत्ययः। विश्वाय इति षष्ठ्यर्थे चतुर्थी ॥१३

कोदृशोऽयं सूर्यः इत्यत्रोच्यते—

चित्रं देवानामुदगादनीकं
चक्षुर्मित्रस्य वरुणस्याग्नेः।
आ प्रा द्यावापृथिवी अन्तरिक्षं
सूर्य आत्मा जगतस्तस्थुषश्च ॥१४

असौ सूर्यः 'उदगात्' उदितः अभवत्। किम्भूतः? 'मित्रस्य वरुणस्य अग्नेः' त्रयाणां देवानां 'चक्षुः'। पुनः किम्भूतः? 'देवानाम्' 'अनीकं' समूहरूपः। कथम् उदगात्? 'चित्रम्' आश्चर्य्यं यथा भवति। उदयानन्तरं 'द्यावापृथिवी अन्तरिक्षं' च 'आप्राः' पूरितवान् स्वेन रश्मिजालेन इत्यर्थः। पुनः किम्भूतः? 'जगतः' जङ्गमस्य 'तस्थुषः' स्थावरस्य च 'आत्मा', स्थावरजङ्गमात्मकसकलसंसारमयः अयमेव सूर्यः इत्यर्थः। एतौ च मन्त्रौ सूर्योपस्थाने विनियुक्तौ सूर्यदैवतौ गायत्री-त्रिष्टुप्छन्दसौ प्रस्कण्व-कौत्सदृष्टौ यथाक्रमम्। आप्राः इति व्यत्ययेन तेः सिः[1] ॥१४

ॐभूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् ॐ ॥१५

---

1 अंशोऽयं मे—पुस्तके न मुद्रापितः।

"ॐकारं पूर्वमुच्चार्य भूर्भुवः स्वरनन्तरम् ।
गायत्री प्रणवश्चान्ते जपे च्चेवमुदाहृता ॥"

इति योगियाज्ञवल्क्यवचनात् जपगायत्रीयम् । शेषमुक्तार्थम् ॥१५

जातवेदसे सुनवाम सोम-
मरातीयतो निदहाति वेदः ।
सनः परिषदति[1] दुर्गाणि विश्वा
नावेव सिन्धुं दुरितात्यग्निः ॥१६

त्रिष्टुबियम् आग्नेयी काश्यपदृष्टा आत्मरक्षायां विनियुक्ता। वयं 'जातवेदसे' अग्नये 'सोमं' यज्ञविशेषं 'सुनवाम' सन्दधीमहि। 'सः' जातवेदाः 'अरातीयतः' अरातिहितान् 'निदहाति' भस्मीकरोति। तथा 'वेदः' वेदं परिषदति[1] राशीकरोति। 'नः' अस्माकम् इत्युभयत्र योज्यम्। तथा 'विश्वा' विश्वम् 'अग्निः' अग्निना 'दुर्गाणि' 'दुरितानि' अतिक्रामति 'नावा सिन्धुमिव' नौकया नदीमिव। सुनवाम इति लोट् उत्तमपुरुषबहुवचनं मस्, "नित्यं ङितः" (पा० ३,४,९९) इति सकारलोपः आट् गुणः। अरातीयतः इति अरातिशब्दात् हितार्थे "प्राक्क्रीताच्छः" (पा० ५,१,१) आर्धादित्वात् द्वितीयान्तात् तसिः। निदहाति इति लेट आट्। वेदः इति द्वितीयार्थे प्रथमा। परिषदति इति लेट्[2], "सदिरप्रतेः" (पा० ८,३,६६) इति षत्वम्। विश्वा इति "सुपां सुलुक्" (पा०७,१,३९) इत्यादिना सोः आत्वम्। दुरितानि इति दुःखेन इतः दुरितः, दुरित इवाचरति इत्याचारे क्विप् ततो लेट आट्। अग्निः इति तृतीयैकवचनस्य सुः ॥१६

---

1 पर्षदति इत्याकरपाठः। भा—परिषदतु। 2 भा—परिषदतु इति लोट् शप।

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वलिङ्गं विरूपाक्षं विश्वरूपं नमो नमः ॥१७

अनुष्टुबियं कालाग्निरुद्रदृष्टा रुद्रदेवता उपस्थाने विनियुक्ता। करोमि इति क्रियापदम् अध्याहार्यम्। शेषं सुगमम्[1] ॥१७

इति भट्ट-श्रीगुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये पञ्चमं खण्डम् ।

---

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः[2] ॥१

गायत्रीयं सरस्वतीदेवताका भरद्वाजदृष्टा तीर्थनमस्कारे विनियुक्ता। 'पावका' पावयित्री, 'वाजिनीवती' वाजः अन्नं तत्कारणतया वाजिनी पृथिवी तद्वती। एवंभूता 'सरस्वती' 'नः' अस्माकं 'यज्ञं' 'वष्टु' वहतु। 'वाजेभिः' साधनैः, वाजः अन्नानि, अनेन च अन्नकारणभूताः मृदः आपश्च लक्ष्यन्ते। 'धियावसुः' इति धीशब्दः कर्मवचनः सारस्वतमन्त्राख्येन कर्मणा सह वसतीति तथोच्यते। वसुः इति वसेरौणादिक उः। पावका इति "नयासयोः" (पा० ७,३,४५) इत्यत्र "पावकादीनां छन्दसि" ( वा० ) इति इत्वप्रतिषेधः। वाजेभिः

---

1 मा—'सर्वेषामादिभूतत्वादतिशयार्थे नमो नम इति द्विरुक्तिः' इत्यधिकम्। प—'तेनायमर्थः—एवम्भूतं पुरुषं नमस्करोमीति द्विरुक्ती रुद्रनमस्कारातिशयबोधिका' इत्यधिकम्।

2 मै—वसु। मै—पुस्तके तथा भ—पुस्तकस्य पादटीकायां मन्त्रस्यास्य व्याख्यान्तरमुपलभ्यते।—'वाजिनीवती वाज अन्नं तदस्यामस्तीति वाजिनी अन्नशाला, सा यस्यां विद्यते सा सम्पन्नशस्यत्ववतीति यावत्।'

इति "बहुलं छन्दसि" (पा० ७,१,१०) इति भिसो नैस्। सप्तव्याहृतिपूर्विकया गायत्र्या करस्थमुदकं सप्तकृत्वः अनुमन्त्र्य यथाविधि सकृदाचम्य पुनरपि यथाविधि आचामेत् ॥१

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतो वृत्वा अत्यतिष्ठद्[1] दशाङ्गुलम् ॥२

अनुष्टुबियं पुरुषदेवता मृद्ग्रहणे विनियुक्ता नारायणदृष्टा। व्याख्यानमुपरिष्टाद् ( ७,२ ) वक्ष्यते[2] ॥२

घृतवती भुवनानामभिश्रियो-
र्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा
विष्कभिते अजरे भूरिरेतसा ॥३

जगतीयं पार्थिवी मृद्ग्रहणे विनियुक्ता प्रजापतिदृष्टा। अयमर्थः— 'घृतवती' उदकवत्यौ द्यावापृथिव्यौ। घृतमित्युदकस्य नाम। 'भुवनानाम् अभिश्रिया' भुवनानि उदकानि तेषाम् अभि अभितः उभयतः ऊर्ध्वम् अधश्च श्रिया संश्रिते। निदाघे पार्थिवम् उदकं

---

1 ग्रा—उदतिष्ठत्।

2 ग्रा—मै—पुस्तकयोः भ—पुस्तकस्य टिप्पण्याञ्च व्याख्यानान्तरम्।—'अस्यार्थः—प्रपञ्चोत्पत्तेः पूर्वमेव सन् इति पुरुष उच्यते। पृषोदरादिः। अथ सः पुरुषः प्रपञ्चावसरे सहस्रशीर्षा सहस्राक्षः सहस्रपात् भूत्वा भूमिं सर्वतः वृत्वा परिवार्य भूमेः सकाशाद् दशाङ्गुलम् आकाशदेशम् अतीत्य उददिष्ठत्। तदेवम्भूतगुणकीर्तनेन पुरुषस्तुतिः। तत्सम्बन्धेन भूमिरपि।' मै—'अत्र ब्राह्मणम्—पूर्वमेवाहमिहासमिति तत् पुरुषस्य पुरुषत्वं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् भूत्वोदतिष्ठत् इति'। मै-टि—'अत्र वृत्वेति पठ्यते सूक्ते तु वृत्वेति।'

दिवम् उद्गच्छति वर्षासु दिव्यं भूमिम् अधिगच्छति। अभिश्रिया इति स्त्रियां प्रथमाद्विवचनं विभक्त्यादेश आकारः। अथवा 'अभिश्रिया' अभिश्रयणेन प्रकारेण, इत्थम्भूतलक्षणे तृतीया सहयोगे वा। 'उर्वी' महत्यौ 'पृथ्वी' विस्तृते। 'सुपेशसा'—पेश इति रूपस्य नाम—कल्याणरूपे, वनस्पत्यादीनि पृथ्व्या रूपाणि, नक्षत्रादीनि दिवः। 'मधुदुघे' मधुनः उदकस्य दोग्ध्र्यौ। 'द्यावापृथिवी' इति विशेष्यं पदम्। 'वरुणस्य धर्मणा' सूर्यस्य विधारकेण विष्णुना 'विष्कभिते' विविच्य स्तम्भिते, 'अजरे' जरारहिते, 'भूरिरेतसा' प्रभूतेन रेतसा युक्ते, रेतः इति उदकस्य नाम। अत्र विष्णुसम्बन्धेन द्यावापृथिव्योः स्तुतिः। सुपेशसा इति प्रथमाद्विवचनादेशः आकारः। एवं भूरिरेतसा इत्यत्रापि भूरि प्रभूतं रेतः उदकं ययोः इति बहुव्रीहिणा द्यावापृथिवी-विशेषणम्। घृतवती पृथ्वी उर्वी इत्यत्र द्यावापृथिवी इत्यत्र च प्रथमा द्विवचनस्य "वा छन्दसि" (पा० ६,१,१०६) इति पूर्वसवर्णः। धर्मणा इति "धृङ् धारणे" इत्यस्मात् कर्तरि "सर्वधातुभ्यो मनिन्" (उ० ४,५८४) ततः तृतीया। वरुणस्य व्यपदेशः सूर्यतुल्यत्वेन[1] ॥३

---

1 प—भ—मै—पुस्तकेषु व्याख्यानान्तरम्—'भूरिरेतसा प्रभूतवीर्येण वराहरूपिणा भगवता भुवनानां मध्ये पृथ्वी मही, उर्वी महापरिमाणा घृतवती यज्ञसम्पादनाय निर्मितेति शेषः। किम्भूतेन भगवता? अभिश्रिया अभिमुखी श्रीर्लक्ष्मीर्यस्य तेन, तथा सुपेशसा शोभनं पेशः शरीरकोशो यस्य तेन, तथा वरुणस्य धर्मणा असतां नियहात् सतामाप्यायनाच्च वरुणस्येव धर्मो यस्य तेन। किञ्च द्यावापृथिवी मधुदुघे मधुस्राविण्यौ निर्मिते। किम्भूते? विष्कभिते अन्योन्यावष्टब्धे, तथा अजरे अविनाशिन्यौ। वरुणस्य धर्मणेति षष्ठ्या अलुक् छन्दसः, "धर्मादनिच् केवलात्" (पा० ५,४,१२४) इत्यनिच्। विष्कभिते इति "यसितस्कभित०" (पा० ७,२,३४) इत्यादिना इट्, "वेः स्कभ्नातेर्नित्यम्" (पा० ८,३,७७) इति मूर्धन्यः'।

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके त्वाञ्च गृह्णामि प्रजया च धनेन च ॥४

अनुष्टुबियं पृथिवीदेवताका विष्णुदृष्टा मृद्ग्रहणे विनियुक्ता निगदव्याख्याता । 'प्रजया च धनेन' युक्तो भूयासम् इति शेषः ॥४

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांशुले ॥५

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः[1] ।
ततो धर्माणि धारयन् ॥६

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥७

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥८

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥९

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्या अधिसानवि ॥१०

षड़िमा गायत्र्यः मधुच्छन्दोदृष्टाः वैष्णव्यः मृन्मर्दने विनियुक्ताः । आद्या व्याख्याता (१।५)[2] ॥५

---

1 सा—अदाभ्यः ।

2 सा—भ—'इदं लोकत्रयं विष्णुः विचक्रमे विभिन्नैः क्रमैः आचक्रमे । त्रेधा

'त्रीणि पदा' त्रीन् पादविक्षेपान् 'विष्णुः' विचक्रमे। 'गोपाः' गोप्ता धर्माणाम्; 'अदाभ्यः'[1] अहिंस्यः। अतः पृथिवीम् आरभ्य विराट्स्थानं यावत् 'धर्मान्' यागादीन् 'धारयन्' अक्रमेण धारयति। ते हि धर्माः पृथिव्याम् अनुष्ठीयन्ते[2] उत्तरेषु लोकेषु फलानि[3] भुज्यन्ते इत्येवम्। पदा इति "शेश्छन्दसि बहुलम्" (पा० ६,१,७०) इति शेर्लोपः, नलोपः। गोपाः इति गुपेः आयप्रत्ययान्तात् क्विप्, "अतो लोपः" (पा० ६,४,४८) वलि यलोपश्च (पा० ६,१,६६)। अदाभ्यः इति दभेर्हिंसार्थात्[4] "कृत्यल्युटो बहुलम्" (पा० ३,३,११३) इति यद्विषये ण्यत्। धर्माणि इति तत् साधने नपुंसकम् इति नपुंसकत्वम्[5] ॥६

हे धर्मानुष्ठातारः! तस्य 'विष्णोः' 'कर्माणि' 'पश्यत' निरूपयत[6]। 'यतः' यः विष्णुः पृथिवीतः आरभ्य विराजः स्थानं यावत् 'व्रतानि' कर्माणि क्रियमाणानि भुज्यमानानि च 'पस्पशे' सम्यङ् निरूपयति[7] पस्पशे इति निर्णयार्थे लटस्तः, छान्दसः श्लुः, "लोपस्त आत्मनेपदेषु"

---

निदधे पदम् पृथिव्याम् अन्तरीक्षे दिवि च। तस्य पदम् अस्य लोकमन्दोहस्य प्रभूते पांशुले गोधूलिसमूहे समूढ़' सम्प्राप्तं संवृतम् इति यावत्' इत्यधिकम्।

1 आ—अदात्यः।　　2 अधिष्ठीयन्ते।

3 मै—कल्याणानि।　　4 आ—दातेर्हिंसार्थात्।

5 प—भ-टिप्पणी—मै-टिप्पणी—गोपाः त्रैलोक्यगोप्ता बलिः अदाभ्यः अदातव्यः असुरेभ्यः सकाशात् विष्णोः वामनरूपिणः त्रीणि पदा त्रीणि पदानि विचक्रमे विक्रान्तवान् विहृतवानित्यर्थः। किं कुर्वन्? धर्माणि महादानजन्यानि पुण्यानि धारयन् सन्। पदा इति "शेश्छन्दसि बहुलम्" इति शेर्लोपः। अदाभ्य इति ददातेर्विच् दाः, अतो नञ्समासः। (प—गोपा इति गुपेः "सर्वधातुभ्योऽसुन्", गुणः, "सान्तमहत"० इति दीर्घः)।　　6 मै—साक्षात् कुरुत।

7 मै—व्रतानि धर्मान् यागादीन् क्रियमाणान् पस्पशे निरूपयति।

(पा० ७,१,४१) इति तलोप:। यश्च 'इन्द्रस्य सखा' 'युज्य:' योग्य:। बाहुलकात् क्यप्। यत: इति प्रथमान्तात् आद्यादित्वात् तसि:[1] ॥७

तच्छब्दवाच्यं विराट्स्थानं 'विष्णो:' यत् 'परमम्' उत्कृष्टं 'पदं' तत् 'सूरय:' ज्ञानिन: 'सदा' 'पश्यन्ति' साक्षात् कुर्वन्ति, न ते कर्ममात्रपर्यवसायिन:। कथं पश्यन्ति? 'दिवीव चक्षुराततम्' यथा दिवि आकाशे आततं विस्फारितं चक्षु: दृश्यान्तरं पश्यति[2] ॥८

'विष्णो: यत् परमं पदं' 'तत्' 'विप्रास:' मेधाविन: 'विपन्यव:' पनति: अर्चनकर्मा वर्णाश्रमविहितै: धर्मै: विविधं वासुदेवम् अर्चयन्त:, 'जागृवांस:' जागरूका: संसारभयोद्वेगेन प्रबुद्धा: 'समिन्धते' सन्दीपयन्ति अभेदं यावत् ध्यायन्तीत्यर्थ:। विप्रास: इति "प्रा पूरणे" असुगन्त: धारणावतोधीवचन:। विपन्यव: इति पनेर्विपूर्वात् आयप्रत्ययाभावपक्षे भावे क्विप् विपन्, तस्मात् इच्छायां क्यच्, अयस्मादिपाठेन भत्वात् नलोपाभाव:[3] "क्याच्छन्दसि" (पा० ३,२,१७०) इति उ प्रत्यय:। जागृवांस: इति जागर्त: लिट: क्वसु:। समिन्धते इति "ञि इन्धी दीप्तौ" रौधादिक: लट् झ: अदादेश:, "श्नान्नलोप:", (पा० ६,४,२३) "श्नसोरल्लोप:" (पा० ६,४,१११)[4] ॥८

---

1 प—भ·टि—मै·टि—विष्णो: कर्माणि पश्यतो यतो व्रतानि पश्यसे। इन्द्रस्य युज्य: सखा॥ बलिरुदाराणि, कर्माणि पश्यत: विष्णो: इयं मतिरुत्पन्नेति शेष:। यत: त्वं व्रतानि दानरूपाणि पश्यसि सम्यगनुष्ठातुं जानासि, ततस्त्वम् इन्द्रस्य सखा युज्य: योजनीय:। त्वमपौन्द्रपदं पश्चात् प्राप्स्यसीति।

2 मै—यथा दिवि आकाशे अक्षि सूर्यालोकमासाद्य आततं विस्तृतं चक्षु: रूपादीन् साक्षात् करोति तद्वदित्यर्थ:।

3 आ—तस्मात् यलोपाभाव:।

4 प—भ·टि.—मै·टि—विपन्यव: विशेषेण स्तुवन्त: जागृवांस: नित्यं तदेकचित्ता: सन्त: समिन्धते तत्त्वज्ञानेन सन्दीप्यमाना भवन्ति।

यतः 'पृथिव्याः' 'अधिसानवि' सानुभवां भूमिमधिश्रित्य 'विष्णुः' 'विचक्रमे' पर्वतैकदेशभूमौ पादं दत्त्वा त्रैलोक्यम् आक्रम्य देवेभ्यो ददौ, 'अतः' भूचरान् 'नः' अस्मान् 'देवाः'[1] 'अवन्तु' रक्षन्तु। अधिसानवि इति सानौ भवा सानवो ततो विभक्त्यर्थेऽव्ययीभावः। इत्यभ्भूताया भूमेः सम्बन्धिनो मृत् पापापनोदनाय मया मृद्यते इति तात्पर्यम्। १०

**उद्वयं तमसस्परि ज्योतिः पश्यन्त[2] उत्तरम्। स्वः पश्यन्त उत्तरम्।[3] देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ ११**

त्रिष्टुबियं प्रस्कण्वदृष्टा सूर्यदेवता तदवेक्षणे विनियुक्ता। 'तमसस्परि' नैशात्तमस उपरि 'ज्योतिः' प्रकाशकं[4] 'वयम्' 'उत्पश्यन्तः' 'सूर्यम्' 'अगन्म' इति सम्बन्धः। "आशंसायां भूतवच्च" (पा० ३,३, १३२) इति गच्छाम इत्यर्थः। कीदृशं ज्योतिः? 'उत्तरम्' उत्कृष्टम्। 'स्वः पश्यन्त उत्तरम्', स्वरिति सूर्यस्य नाम, ज्योतिर्मध्ये सूर्यं देवमुत्कृष्टम्। 'देवत्रा' 'देवं' पूजयितुं पश्यन्तः। ततः सूर्यस्य मण्डलं भित्त्वा 'उत्तमं' 'ज्योतिः' ब्रह्माख्यम् अगन्म इति वाक्यपरिसमाप्तिः। देवत्रेति- "देवमनुष्य०" (पा० ५,४,५६) इत्यादिना द्वितीयान्तात् त्राप्रत्ययः। अगन्मेति गमेः "मन्त्रे घसह्वर०" (पा० २,४,८०) इति च्लेर्लुक्, "मो नो धातोः" (पा० ८,२,६४) इत्यनुवृत्तौ "म्वोश्च" (पा० ८,२,६५) इति नकारः[5]॥ ११

1 भ—त्रैलोक्यमाक्रान्तवान् अतः पृथिव्या आरभ्य विराजः स्थानं तावत् तत्तल्लोककर्तृभोक्त्रवस्थासु देवाः सुराः। नः अस्मान्।

2 लाट्यायनीये (२,१२,१०) द्राह्यायणीये (६,४,१०) च श्रौतसूत्रयोरुपलब्धौ स्वरित्यादिमन्त्रभागोऽयमृग्वेदे नैव पठ्यते।

3 मै—ज्योतिष्पश्यन्तः।　　　　4 मै—सूर्यप्रकाशकम्।

5 प—भ-टि—मै-टि—सूर्यं देवम् उत्तमं ज्योतिः वयम अगन्म प्रतिपद्यामहे।

**उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।**
**अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ १२**

व्याख्यातम् ( ४।१०० )[1]।

**उद्धृतासि वराहेण कृष्णेन शतबाहुना ।**
**मृत्तिके हर[2] मे पापं यन्मया दुष्कृतं कृतम्[3] ॥ १३**

अनुष्टुबियं पार्थिवी प्रजापतिदृष्टा मृदनुलेपने विनियुक्ता। हे 'मृत्तिके'! जलमग्ना 'कृष्णेन' वराहरूपेण बहुबाहुना त्वम् 'उद्धृता' असि इति स्तुतिः। अथ प्रार्थना—हे मृत्तिके! 'मे' मम 'पापं हर' 'यत् मया दुष्कृतं कृतम्'। दुष्कृतशब्देन पापस्यैवानुभाषणम्[4] ॥ १३

**अमोऽसि प्राण तद्दृतं ब्रवी-**
**म्यमा ह्यसि सर्वमनुप्रविष्टः ।**
**स मे जरां रोगमपमृज्य शरीरा-**
**दपाम एधि मा मृथा न इन्द्र ॥१४**

---

किम्भूतं ज्योतिः? देवत्रा देवं भजतीति देवत्रा। किमर्थम्? तमसः क्षयायेति शेषः। ज्योतिश्चेत् सूर्यमगमत् ततो दिवसः सम्पन्नः अतो वयं सूर्यं प्रतिपद्यामहे इति शेषः। किम्भूता वयम्? ज्योतिरुत्पश्यन्तः स्वः परिपश्यन्तः। किम्भूतं ज्योतिः? उत्तरम् अतिशयेनोद्गतम्। स्वः किम्भूतम्? उत्तरम् उत्कृष्टतरम्।

1 आ—प—त्रिष्टुबियं शुनःशेपदृष्टा वरुणदेवताका। शुनःशेपः किल हरिश्चन्द्रस्य राजर्षेः राजसूययज्ञे अभिषेचनीये अहनि पादयोः मध्ये कण्ठे च त्रिभिः पाशैः बद्धः वरुणमनयर्चोपाधावत्। भ-टि—मै-टि—'अत्र तु वसिष्ठ ऋषिः। पूर्वार्धं वारुणमुत्तरार्धं सौरम्। अर्धर्चे वाक्यान्तरोपन्यासे—तेनात्र हे आदित्य! हे सूर्य! इति योजनीयम्'।

2 'हन' इति तैत्तिरीयारण्यके मुद्रापितः पाठः।

3 प—मै—'आक्रम्य मम गात्राणि सर्वपाप प्रमोचय' इत्यधिकं श्लोकार्धम्।

4 व्याख्यानांशोऽयं प—मै—पुस्तकयोर्न दृश्यते।

ककुबियमैन्द्री प्रजापतिदृष्टा मृदनुलेपने विनियुक्ता[1]। हे 'प्राण!' प्रजापते! 'अमः असि'—अमः इत्यन्नस्य नाम—अन्नं त्वं भवसि। 'तत्' तस्मात् अहम् 'ऋतम्' सत्यं 'ब्रवीमि'। 'हि' यस्मात् त्वम् 'अमा' 'असि' अतः अन्नमयो भूत्वा 'सर्वम्' अशेषं भूतजातम् 'अनुप्रविष्टः' सर्वगतः असि। 'सः' इत्थम्भूतः त्वं 'मे' मम 'शरीरात्' 'जरां' 'रोगं' च 'अपमृज्य' अपनीय 'अपामः एधि', आमः[2] इति रोगः उच्यते, अपगतः आमः[2] यस्मात् सः अपामः रोगनिराकर्ता भव इत्यर्थः। तथा हे प्राण! 'इन्द्र'! परमेश्वर! 'नः' अस्माकं 'मा मृथाः' न नंक्ष्यसि। अमा इति "अन्येषामपि दृश्यते" (६,१,१३७) इति दीर्घः ॥१४

गावश्चिद् घासमन्यवः सजात्येन मरुतः सबन्धवः। रिहते ककुभो मिथः ॥१५

उष्णिगियं गोदैवता गोमयानुलेपने विनियुक्ता[3]। 'चित्' शब्दः किलार्थे। अनावृष्टौ 'गावः' किल 'घासमन्यवः' बालतृणशोकाविष्टाः। 'सजात्या' वेगवत्त्वेन पावनत्वेन 'इन-मरुतः' सूर्य-वायोः मिथः 'सबन्धवः' अन्योन्यं बन्धुताम् उपगताः 'ककुभः' दिशः 'रिहते' आस्वादयन्ति धावन्ति इत्यर्थः। रिहते इति लिहेः वर्णव्यत्ययेन लकारस्य रेफः। अनेन गवां स्तुतिरुक्ता। अतः तत्सम्बन्धि पुरीषं पापापनोदनाय आलभ्यते यति तात्पर्यम् ॥१५

ऋतञ्च सत्यञ्चाभीद्धात्०···॥१६

समुद्रादर्णवादधि०···॥१७

---

1 प—भ—वसिष्ठ ऋषिः भूरिक्ककुप्छन्दः इन्द्रो देवता मृदा गात्रालम्भे विनियोगः।

2 प—अमः।

3 भ—मै·टि—सिन्धुद्वीप ऋषिः भूरिक्ककुप्छन्दः मरुद्देवता गोमयेन गात्रालम्भने विनियोगः।

सूर्याचन्द्रमसौ०…॥१८

तिस्रोऽनुष्टुभः, ऋषिरघमर्षणः, शुष्काघमर्षणे विनियोगः, देवता भाववृत्तः। व्याख्यानं पूर्वम् (५।१२-१४) उक्तम् ॥१६—१८

शन्नो देवीरभीष्टये०… ॥१९

गौतम ऋषिः, छन्दो गायत्री, आपो देवताः, विनियोगो मार्जने। व्याख्यानमुक्तम् (२।१६) ॥१९

आपो हिष्ठा०…॥२०

यो वः शिवतमो रसस्तस्य०… ॥२१

तस्मा अरङ्गमाम०…॥२२

त्रयं व्याख्यातम् (५।९—११) ॥२०—२२

यः पावमानीरध्येत्यृषिभिः सम्भृतं रसम्।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥२३

पावमानीर्यो अध्येत्यृषिभिः सम्भृतं रसम्।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥२४

पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः।
ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥२५

पावमानीर्दधन्तु न इमं लोकमथो अमुम्।
कामान् संवर्धयन्तु नो देवीर्देवैः समाहृताः ॥२६

येन देवाः पवित्रेणात्मानं पुनते सदा।
तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥२७

**पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् ।**
**पुण्यांश्च भक्षान् भक्षयत्यमृतत्वञ्च गच्छति ॥२८**

षड़िमा अनुष्टुभो मधुच्छन्दोदृष्टा अब्दैवता मार्जने विनियुक्ताः । 'यः' द्विजः 'पावमानीः' पावमानो वायुः तेन उदीरिताः ऋचः 'अध्येति' अधीते 'सः' 'सर्वं' 'रसं' षट्प्रकारकं[1] 'पूतं' पवित्रम् 'अश्नाति' भुङ्क्ते । कुतः तस्य पवित्रता ? तत्राह—यतः 'ऋषिभिः' 'सम्भृतं' उपचितं 'मातरिश्वना' वायुना च 'स्वदितम्' ;—उभयमपि एतत् पवित्रताकारणम् ॥२३

'पावमानीः' 'यः' 'अध्येति' द्विजः, 'तस्मै' द्विजाय 'सरस्वती' देवी 'रसम्' अकथितं कर्म, 'क्षीरं', 'सर्पिः', 'मधु', 'उदकं' च 'दुहे' दुग्धे । किम्भूतं रसम् ? 'ऋषिभिः सम्भृतम्' । दुहे इति "लोपस्त आत्मनेपदेषु" (पा० ७,१,४१) इति तकारलोपः ॥२४

'पावमानीः' पावमान्यः ऋचः, 'स्वस्त्ययनीः' स्वस्त्ययन्यः 'सुदुघाः' सुखेन दुह्यन्ते, 'घृतश्चुतः' घृतस्यन्दिन्यः । एवम्भूताश्चेत् इमाः अतः अध्येतृषु 'ब्राह्मणेषु' 'अमृतम्' अयाचितं भैक्षं 'हितं' सम्पन्नम् अमृतरूपं जातं यतः तदीयो 'रसः ऋषिभिः सम्भृतः' । पावमानीः इत्यादिषु जसि "वा छन्दसि" (पा० ६,१,१०६) इति पूर्वसवर्णः । सुदुघाः इति "दुहः कब्घश्च" (पा० ३,२,७०) इति कब् घश्चान्तादेशः ॥२५

'देवैः समाहृताः' पवमानप्रणीताः ऋचः 'पावमानीः' पावमान्यः 'देवीः' देव्यः 'नः' अस्माकम् 'इमं' लोकम्' 'अथो' 'अमुं' च 'लोकं' परलोकं 'दधन्तु' धारयन्तु । तथा 'नः' अस्माकं 'कामान्' अभिलाषान् 'संवर्धयन्तु' । दधन्तु इति "दध धारणे" व्यत्ययेन परस्मैपदम् ॥२६

---

1 प—भ—सर्वं वषट्कारम् ।

'देवा:' 'येन' सहस्रधारेण 'पवित्रेण' 'सदा' 'आत्मानं' 'पुनते', 'तेन' 'सहस्रधारेण' सहस्रधारानुकल्पेन कुशत्रयायमुक्तेन तोयेन 'न:' अस्मान् 'पावमानी:' पावमान्य: 'पुनन्तु' ॥२७

इमा: पावमान्य: स्वस्त्ययन्य:। अत एव 'ताभि:' पावमानीभि: 'नान्दनं' नन्दनम् इन्द्रस्य वनं गच्छति। तथा 'पुण्यांश्च भक्षान् भक्षयति'। तथा 'अमृतत्वञ्च' मोक्षभागित्वञ्च 'गच्छति'। नान्दनम् इति स्वार्थे प्रज्ञादित्वात् अण् ॥२८

तरत् स मन्दी धावति धारा सुतस्यान्धस:।
तरत् स मन्दी धावति ॥२९
उस्रा वेद वसूनां मर्त्यस्य देव्यवस:।
तरत् स मन्दी धावति ॥३०
ध्वस्रयो: पुरुषन्त्योरा सहस्राणि दद्महे।
तरत् स मन्दी धावति ॥३१
आ ययोस्त्रिंशतं तना[1] सहस्राणि च दद्महे।
तरत् स मन्दी धावति ॥३२

चतस्र इमा गायत्र्य: सौम्या अवत्सारदृष्टा मार्जने विनियुक्ता:। अत्रेतिहासमाचक्षते—ध्वस्रा इति पुरुषन्ती इति द्वे पण्याङ्गने। तयोस्तरन्त-पुरुमीढ़ाभ्यामृषिभ्यां धनधान्यादि प्रतिगृहीतमापत्काले। तत: कथमिदमावयोरप्रतिगृहीतं भवेदिति तावेतत्सूक्तं चतुर्ऋचं जेपतु: तरत्समन्दीयम्। ततस्तयोर्वित्तमात्तमप्रतिगृहीतम् अभवत्।

तरत् स मन्दी धावति इति 'स:' सोम: 'मन्दी' स्तुतिमान् 'तरत्' तरन् 'धावति' यावत्कलुषं गच्छति[2]। किं सोमेन यजेत इति

1 तु ना। 2 मै-टि—यावत्फलं संगच्छति।

विहिता लता याति ? न इत्याह किन्तु तद्विकृतिः 'धारा' 'सुतस्य' अभिषुत्य चूर्णीकृतस्य 'अन्धसः' अन्नस्य अदनीयस्य रसीभूतस्य सम्बन्धिनी। तरदिति णिजर्थोऽवान्तर्नीतः। अस्मात् पापात् उत्तारयन् धारयेत् शोधयेत्। तरत् इति लिङ्गव्यत्ययः। धावति इति लिङर्थे लेट्। मन्दी इति मन्दतेः स्तुतिकर्मणो घञन्तात् इनिः[1] ॥२९

अत्र यच्छब्दोऽध्याहर्तव्यः। यत् पापं 'वसूनां' धनानाम् 'अवसः' अवसत्, तिङ्व्यत्ययः, अन्नस्य प्रतिग्रहे भवति। 'मर्त्यस्य' मरणधर्मिणः यच्चान्यदपि पापं गवां माता 'उस्रा' 'देवी' 'वेद', तत् पापं 'स' सोमः तारयन् सन् 'मन्दी' अस्मत्कृतस्तुत्या स्तुतिमान् इत्युक्तार्थम्[2] ॥३०

'ध्वस्रयोः' इति पुरुषन्त्यभिप्रायं युगपदधिकरणतायां द्विवचनं षाष्ठं साप्तमं वा। एवं 'पुरुषन्त्योः' इति ध्वस्राभिप्रायम्। ध्वसना

---

1 भ—मी—पूर्वं किल चन्द्रमाः श्वशुरशापात् मन्दी पापी क्षयी बभूव। पुनरीदृशात् तदनुग्रहात् यः प्रभासे तीर्थे तरत् सः मन्दी मन्दकर्माऽपि धावति शुध्यति अमलीभवति। ततो मलाभावे क्षयेणापि हीयते इति तात्पर्यम्। तरति-धावती प्लवन-शुद्धिवचनौ। तरदिति लिङर्थे लेट् अट्, "इतश्च लोपः परस्मैपदेषु" (पा० ३,४,९७) इति तिप इकारलोपः। तदनु चन्द्रवैमल्यदर्शिना महर्षिणावतारेण प्रभास उच्यते—तस्य चन्द्रमसः अन्धसः अन्नस्य अमृतस्य धारासु अमावस्याप्रथमविभागे ( प—विभागे ) तोयमुपगतासु यः तरेत् सः मन्दी एनस्वी धावति शुध्यति अनेनाः सम्पद्यते। चन्द्रमसो देवत्वात्तदन्नममृतं तन्मयत्वेन ख्यातः शीतांशुः।

2 मी—वसूनां देवविशेषाणां मध्ये मर्त्यस्य क्षयिणः सोमस्य उस्रा किरणमाला देवी स्तुत्या अवसः अवसत् अमावस्याप्रथमभागे जलेषु इति अहं वेद जानामि अतस्तेषु यस्तरेत् स मन्दी धावतीति पूर्ववत्। अवस इति व्यत्ययेन तिपः किप्। उस्राशब्दोऽपि किरणवाची स्त्रीलिङ्गः।

ध्वस्ना । पुरूणि बहूनि धनानि अस्याः सन्तीति पुरुषन्ती पृषोदरादिः । बहूनि 'सहस्राणि' धनानां वयम् 'आदद्महे' आत्तवन्तः । अस्मात् सोमधारापानात् सोमः तारयन् 'धावति' धावेत् शोधयेदिति पूर्ववत्[1] ॥३१

'ययोः' पण्याङ्गनयोः 'त्रिंशतं' 'तना' सहस्राणि आदद्महे । 'तना' इति धनस्य नाम सर्वविभक्ति-वचनसाधारणम् । 'चः' पूरणे । तरत् स मन्दीत्युक्तार्थम् । आत्तम् अस्याः प्रतिगृह्णीतं भवति य एवं वेद इत्यर्थवादः[2] ॥३२

**एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।**
**शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान् ममत्तु[3] ॥३३**

अनुष्टुभौ घृतदचदृष्टे इन्द्रदैवते मार्जने विनियुक्ते । 'आ इत' आगच्छत हे उद्गातारः ! 'उः' पूरणे । 'नु' क्षिप्रम् 'इन्द्रं' 'स्तवाम' । किम्भूतम् ? 'शुद्धं' निर्मलम् । केन ? 'शुद्धेन' निर्मलेन 'साम्ना' शुद्धाभिधानेन, अभिव्यक्तैरक्षरैः 'शुद्धैः' 'उक्थैः' शस्त्रैर्वा 'वावृध्वांसं' पुनः अत्यर्थं वा वर्धमानम् । स च इन्द्रः 'शुद्धैः' सोमैः 'ममत्तु' हृष्यतु । 'आशीर्वान्' यजमानान् आदाय दास्यमानेन आशिषा तद्वान् । प्रथमं

---

1 नै—ध्वस्ने ध्वंसनधर्मिण्यौ पीयूषधारे तयोः प्रागल्भ्यात् पुरुषन्त्योः पुरुषायमाणयोः सहस्राणि वयमत्र तीर्थे आदद्महे अतोऽत्र तीर्थे यस्तरेत् स मन्दी धावति । ध्वस्नयोरिति "स्फायीतञ्चि" (उ० २,१७०) इत्यादिना रक् । पुषषन्त्योरिति आचारक्विबन्ताच्छतृप्रत्ययः । आदद्महे इति व्यवहितोपसर्गसम्बन्धः ।

2 मे—ना इति न च इति निपातद्वयं प्रतिषेधद्वयं बोधयति ययोः तु अम्बमेधीयाम्बस्य त्रिंशतं सहस्राणि अत्र तीर्थे न आदद्महे इति न, अपि तु आदद्महे । तेनास्य तीर्थस्य पुण्यतमत्वात् अस्मिन् यस्तरेत् स मन्दो धावति सर्वं चैतदवभारभाषितं श्रुत्या भण्यते ।

3 प—मे-टि—शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वानामतु ।

स्तोत्रं ततः शस्त्रयज्ञानन्तरं चमसैरूर्ध्वपात्रेण सोमः आहूयते इत्ययं क्रमः। वावृध्वांसम् इति वृधः यङ्लुगन्तात् "छन्दसि लुङ्लङ्लिटः" (पा० ३,४,६) इति लिट् तस्य क्वसुः, द्वितीयैकवचनम्, छान्दसत्वात् न रोगादिः, ततो "दोर्घोऽकितः" (पा० ७,४,८३) इति दीर्घः। ममत्तु इति मदो इष व्यत्ययेन शपः श्लुः, "श्लौ" (पा० ६,१,१०) इति द्वित्वम्[1] ॥३३

**तमु ष्टवाम यङ्गिर[2] इन्द्रमुक्थानि वावृधुः[3]।**
**पुरूण्यस्य[4] पौंस्या सिषा[5]सन्तो वनामहे ॥३४**

'उः' पादपूरणे। 'तम्' इन्द्रं 'वयं' हे सामगाः! 'स्तवाम'। 'यं' 'गिरः' रथन्तरादिगीतयः 'उक्थानि' निष्केवल्यादीनि शस्त्राणि 'वावृधुः' अत्यर्थं बाधयन्ति। किञ्च 'अस्य' 'पुरूणि' प्रभूतानि अर्थात् धनानि 'पौंस्या' बलानि 'वनामहे' सम्भजामहे 'सिषासन्तः' धनादिसम्भक्तो-च्छया युक्ताः। ष्टवाम इति वर्णव्यत्ययेन मूर्धन्यः। वावृधुः इति यङ्लुगन्तात् पूर्ववत् कालसामान्ये लिट्, रोगादेरभावो दीर्घश्च। पौंस्या इति

---

1 प—मे-टि—आ, इतः, अनु इति। इत इति पूर्वकाण्डीस्थितदेवतापरामर्षः। इतोऽनु इतः पश्चादिन्द्रं स्तवाम। किम्भूतम्? शुद्धम् अकलुषम्। केन स्तवाम? शुद्धेन साम्ना निर्मलेन सामगानेन। ततः स्तुतः सन् शुद्धैरुक्थैः निर्मलैरुक्थलक्षणैर्वावृद्धा वर्धताम् अर्थादिन्द्र एव। (मे-टि—तथा च स वृद्ध इन्द्रः) संशुद्धैः अमोघवचनाश्रितैः (मे-टि—अमोघैर्वचनामृतैः) आशीर्वान् आशंसापरः आमतु आगच्छतु। वावृद्धाम् इति वृधेर्व्यत्ययेन शपः श्लुः, "तुजादीनां दीर्घोऽभ्यासस्य" (पा० ६,१,७) इति दीर्घत्वं सार्वधातुकङित्वाद गुणाभावः। आशीर्वान् इति आशीःशब्दात् मतुप् "छन्दसीरः" (पा० ८,२,१५) इति वत्वम्। आ अमतु इति "अम गत्यादिषु" लोट्, आ इति व्यवहितेनापि सम्बन्धः।

2 प—मे-टि—तमुष्टवामयं गिर। 3 भ—मै—वावृधः।

4 प—मै-टि—पुरूण्यस्य। 5 द—मै-टि—पौंस्याभिषा।

पुंसः कर्म इत्यर्थे "गुणवचन" ( पा० ५,१,१२४ ) इत्यादिना ष्यञ्[1] ॥३४

**न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्[2] ।**

**न क्येवं यथा त्वम् ॥३५**

गायत्रीयम् ऐन्द्री इन्द्राणीदृष्टा मार्जने विनियुक्ता। अयमर्थः—हे 'इन्द्र' ! 'त्वदुत्तरं' तव उपरि त्वाम् अभिभविता कोऽपि 'न' अस्ति। 'कि' इति कः इत्यर्थे किमः छान्दसः सुलुक् मलोपश्च। 'न' च त्वत्तो 'ज्यायः' श्रेष्ठं वस्तु 'अस्ति'। हे वृत्रहन्! 'न कि एवं', न कोऽपि एवंविधः अस्ति 'यथा त्वम्', तत्सदृशो नास्तीत्यर्थः, सर्वः त्वत्तो हीन इत्यभिप्रायः। एतेन अतिशयितो महिमा सूचितः इत्यवगन्तव्यम् इति तात्पर्यम्[3] ॥३५

---

1 प—मै-टि—इन्द्रमाहात्म्यसूचकानि उक्थानि गिरः वचनरूपाणि वावृधुः अवर्धन्त। ततः तम् इन्द्रं वयं वनामहे। सम्भजामहे। किम्भूतम्? उक्षावामयम् उक्षां वमन्तीत्युक्षवामाः, कर्मण्यन्, तान् यातीत्युक्षवामयः। "आतोऽनुपसर्गे कः" ( पा० ३,२,३ ) इन्द्रो ह्युष्णो-ष्णोरणशीलान् दिवसान् मेघोघप्रेरणार्थं याति। किम्भूता वयम्। पुरूणि अस्य कुविदस्य कौवेरस्य निधेः पुरूणि बहुत्वे आशिषा बहवो निधयोऽस्माकं भूयासुरित्येवंरूपया सन्तः तिष्ठन्तः। वावृधुः इति वृधेः व्यत्ययेन परस्मैपदं लट्, सिः, शपः श्लुः, "सिजभ्यस्त०" ( पा० ३,४,१०९ ) इति झेर्जुस्, पूर्ववदभ्यासस्य दीर्घः। वनामहे इति "वन षण सम्भक्तौ"।

2 प—मै-टि—न क्यायो अस्ति वृत्रहन्।

3 प—मै-टि—वामदेवदृष्टा। कि इति "कै गै शब्दे" भावे क्विप् काः, ततः सप्तमी, "आतो धातोः" ( पा० ६,४,१४० ) इत्याकारलोपः। हे इन्द्र त्वाष्ट्रं वृत्रं हतवान् इति एवंभूते किशब्दे सति त्वत्सकाशादुत्तरं नास्ति। प्रश्नपूर्वकं हि उत्तरं भवति; अधुना ब्रह्म-हत्याविष्टं त्वां न कोऽपि किमपि पृच्छति। तथा हे वृत्रहन् तथाभूते किशब्दे न आपः सन्ति वृष्टिरूपं जलं न विद्यते त्वत्पापादेव वृष्ट्यनुत्पत्तेः। तथा यथा त्वं पूर्वमासीः सम्प्रति कि-शब्दे सति एवं न भवसि इति वाक्यशेषः। तस्मात् प्रायश्चित्तं तथाभूतस्त्वं चर येन त्वमुत्तरार्हो वृष्टिदाता पूर्ववत् परमैश्वर्यसम्पन्नश्च भवसीति वामदेवेनाभिविच्य सूयते।

**सहस्रशीर्षा पुरुषः०.... ॥३६**

**त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।**
**तथा विश्वं व्यक्रामत् साशनानशने अभि ॥३७**

**पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।**
**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥३८**

त्रितयमिदं जलप्राणायामे विनियुक्तं पुरुषदेवताकं नारायणदृष्टमनुष्टुप्छन्दस्कम् उपरिष्टात् (७।२,३,५) व्याख्यास्यते[1] ॥३६—३८

**उदुत्यं...... ॥३९**

**चित्रं...... ॥४०**

व्याख्यातम् ( ५।१३,१४ ) ॥३९'४०

---

1 भ—"प्रपञ्चात् पूर्वमपि सन् इति पुरुषः, पृषोदरादिः, ब्रह्म उच्यते । स च सहस्रपात् सहस्रशिरस्कः सहस्राक्षः भूत्वा भूमिं सर्वतः परिवार्य ततो दशाङ्गुलप्रमाणदेशमतीत्य अतिष्ठत् इत्याख्यानवार्ता ।

पादच्छब्दः अङ्गवचनः "त्रीणि पदा विचक्रमे" इत्याद्युक्तप्रकारेण पुरुषः उदैत् । ऊर्ध्वः उद्गतः अस्य पुरुषस्य पादः इह इहलोके पुनः अभवत्, भूः प्रादुर्भावि, प्रपञ्चात्मना पुनः प्रादुर्भूतः । तथा किञ्च विष्वङ् व्यक्रामत् तिर्यग् विचक्रमे । साशनानशने इति साशनम् भोक्तृ अनशनम् अभोक्तृ तदुभयञ्च व्यक्रामत् इति सम्बन्धः ।

प्रपञ्चेन सहाभेदोऽत्र ब्रह्मणः प्रतिपाद्यते । यत् भूतम् अतीतं यच्च भाव्यम् अनागतं तदिदं पुरुष एव । पादः अस्य सर्वा भूतानि सर्वाणि भूतानि पृथिव्यादीनि । तथा अस्य देवस्य त्रिपादस्य पादं यत् ऊर्ध्वं तद् दिवि देवलोके विराट्स्थाने अमृतं मरणरहितं तिष्ठति तत् योगिनः उपासते इति शेषः । अनेन तृचेन जले मग्नो जपं कुर्यात् ।"

आयं गौः पृश्निरक्रमीदसदं[1] मातरं पुरः ।
पितरञ्च प्रयन्त् स्वः ॥४१
अपत्येतायवो यथा न चत्रायं त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥४२
तरणिर्विश्वदर्शितो ज्योतिष्कृदसि[2] सूर्यं ।
विश्वमाभासि रोचनम् ॥४३
उद्यामेषि रजः पृथ्वहा[3] मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्यं ॥४४

चतस्रः इमाः गायत्र्यः सूर्यदेवताकाः तदुपस्थाने विनियुक्ताः यथाक्रमं सत्यधृति-प्रस्कण्व-मेधातिथि-प्रजापतिदृष्टाः । 'पृश्निः' चीणदेहः अनूरुः 'अक्रमीत्' आक्रान्तवान् ; तदनु अहं 'गौः' किरणरूपो 'आयम्' आगतोऽस्मि इति सूर्येण उच्यते । ततः 'पुरः' स्वस्थानात् 'स्वः' स्वर्गं मयूखात्मना 'प्रयन्' गच्छन् अहं 'मातरम्' अदितिं 'पितरं' कश्यपञ्च 'असदम्' प्राप्तवान् अस्मि । आयम् इति इणः लङ् मिप् । असदम् इति "षद्लृ विशरणगत्यवसादनेषु" लुङ् मिप्, लृदित्वात् पुषादिसूत्रेण (पा० ३,१,५५) च्लेः अङ् । प्रयन् इति इणः शतृप्रत्ययः तस्मादुत्तरस्य स्वःशब्दस्य "नश्च" (पा० ८,३,३०) इति धुट् चर्त्वम् ॥४१

अकारो निषेधवाची । 'चत्रा' सारथिना 'त्यक्तुभिः' अतिवेगात् प्राप्तदेशपरिहारशीलैः वाजिभिः 'अयं' सूर्यभक्तः 'सूराय' आदित्याय 'विश्वचक्षसे' जगदवलोकयित्रे न 'पत्येत' न नीयेत इति 'न' अपितु

---

1 असदन्मातरम् इति सायणव्याख्याती मुद्रापितः पाठः ।

2 सा—ज्योतिःकृदसि ।

3 मै—पृथुहा ।

नीयेत। अत्र दृष्टान्तः—'यथा' 'आयवः' प्राणिनां जीवितकालाः। ते यथा ज्योतिःपथादागत्य सूर्यसारथिना[1] तद्वाहैः सूर्यसकाशं नीयन्ते[2]। त्यक्तुभिः इति "सितनिगमि०" (उ०६८) इत्यादिना तुन् बहुलवचनात् त्यजेरपि भवति ॥४२

हे 'सूर्य'! त्वं 'तरणिः' 'असिः' तारकः भवसि। तथा 'विश्वदर्शितः' असि अन्धकारे मग्नं विश्वं दर्शितं येन सः विश्वदर्शितः इति आहिताग्न्यादित्वात् निष्ठायाः परनिपातः। तथा 'ज्योतिष्कृत्' असि आलोककारी भवसि। तथा 'विश्वम्' 'आभासि' दीपयसि, अन्तर्भावितण्यर्थो भातिः। किम्भूतं विश्वम्? 'रोचनं' सूर्यलोकसम्पर्कात् दीप्यमानम्। "अनुदात्तेतश्च हलादेः" (पा० ३,२,१४९) इति युच ॥४३

हे 'सूर्य'! त्वं 'पृथ्वहाः' पृथुवासरः[3] 'उदेषि'। किं कुर्वन्? 'द्यां' दिवं 'रजः' भुतलसन्निविष्टं 'मिमानः' परिच्छिन्दन्, तथा 'जन्मानि पश्यन्' उत्पत्तिभाजाम् उत्पत्तीः अवलोकयन्। कैः उदेषि? 'अक्तुभिः' कुटिलगमनैः हयैः इत्यर्थः। उदेषि इति व्यवहितोपसर्गसम्बन्धः। पृथ्वहाः इति पृथूनि अहानि यस्मात् पृथ्वहाः, मेषादिषट्के भारते वर्षे, तुलादिषट्के कुरुषु उत्तरेषु तेनायं सर्वकालं पृथ्वहाः सूर्यो भवति। सर्वमेतत् स्तुतिपरम्[4]। अक्तुभिः इति "अक कुटिलायां गतौ" तस्मात् "सितनिगमि०" (उ० ६८) इत्यादिना बहुवचनात् तुन्। एवम्भूतं भगवन्तम् उपतिष्ठे इति तात्पर्यम् ॥४४

---

1 पदमिदं भ—पुस्तके न दृश्यते।

2 मै—विश्वचचर्से इति "असनर्यास्य प्रतिषेधो वक्तव्यः" इति न ख्यादेशः, यथा नृचक्षा इत्यव।

3 मै—पृथुह्वाः पृथुगमनः।

4 मै—पृथुह्वाः इति "ओहाङ् गतौ" भावे क्विप्, ताः पृथवी महत्यो यस्य सः पृथुह्वाः

अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥४५

ऋग्वेदादिमन्त्रोऽयम् ; गायत्री छन्दः, मधुच्छन्दा द्रष्टा, देवता अग्निः, विनियोगो ब्रह्मयज्ञे । अहम् 'अग्निम्' 'ईले' स्तौमि । किम्भूतम् ? 'पुरोहितं' प्रथमतः आहितम् अर्पितमिति यावत् । तथा 'देवं' स्तुत्यम् । तथा 'यज्ञस्य ऋत्विजम्', यजमानानुरोधेन यागकारी ऋत्विग् भवति, अग्निरपि यजमानाभ्युदयाय यागकारी ऋत्विगुच्यते । तथा 'होतारं' होमस्य प्रधानसाधकत्वेन कर्तृभूतम् । तथा 'रत्नधातमं' रत्नं सुवर्णादिकं तद् दधातीति रत्नधाः, अतिशयेन रत्नधाः रत्नधातमः । प्रथमं धनदातारम् अग्निं स्तौमि, ततः स्तुतः स मह्यं धनं ददातु इति वाक्यार्थः ॥४५

इषेत्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥४६

यजुर्वेदादिमन्त्रोऽयं याज्ञवल्क्यदृष्टः वायुदेवतः जपे विनियुक्तः ; छन्दः उष्णिक् । हे शाखे 'त्वा' त्वां 'इषे' वृष्ट्यै छिनद्मीति शेषः । तथा 'त्वा' त्वां 'ऊर्जे' बलाय[1] सन्नयामीति शेषः । तथा हे वत्साः ! यूयं 'वायवः' 'स्थ', यथा वायुः वृष्ट्यादिद्वारेण[2] जगताम् आप्यायकः तथा यूयमपि प्रस्रवणद्वारेण यज्ञनिष्पत्तिकारिणः, यज्ञाच्च वृष्टिरिति परम्परया जगताम् आप्यायकाः स्थ । अतः 'सविता' देवः 'वः' युष्मान् 'श्रेष्ठतमाय' अत्यन्तश्रेष्ठाय कर्मणे यज्ञाय 'प्रार्पयतु' । इषे इति कर्मणि क्विप् तथा चेष्यमाणतया वृष्टिरुच्यते । ऊर्जे इति

1 मै—रसाय । 2 मै—वृष्ट्यादिधारणेन ।

"ऊर्ज बल-प्राणनयोः" "भ्राजभास" (पा० ३,२,१७७) इत्यादिना क्विप्। अग्निहोत्रादिकेष्टौ समिधां छेदने सञ्चयने धेनुवत्सोपस्पर्शने[1] च शाखा-वत्स-धेनवः प्राप्यन्ते ॥४६

**अग्न आयाहि वीतये गृणानो हव्यदातये ।**

**निहोता सत्सि बर्हिषि ॥४७**

सामवेदादिमन्त्रोऽयम् आग्नेयः गौतमदृष्टः; छन्दः गायत्री। हे 'अग्ने'! 'आयाहि' आगच्छ अत्र मम कर्मणि सन्निहितो भव। किमर्थम्? अस्मद्दातव्यस्य अन्नस्य 'वीतये' खादनाय, "वी गति-प्रजन-कान्त्यसन-खादनेषु" क्तिन्। तथा 'हव्यदातये' हव्यस्य शुद्ध्यै, "दैप् शोधने" इत्यतः क्तिन्। आगत्य च 'बर्हिषि' आस्तृतकुशे 'सत्सि' सीद स्थिरो भव। किं कुर्वन्? 'गृणानः' शब्दं कुर्वन्, 'निहोता' निरवशेषहोता। सत्सि इति सदेर्लट् सिप्, "बहुलं छन्दसि" (पा० २,४,७३) इति शपो लुक् ॥४७

**शन्नो देवीः०……॥४८**

अथर्ववेदादिमन्त्रोऽयं पिप्पलाददृष्टः वरुणदैवतः; छन्दो गायत्री। अत्र च "शन्नो भवन्तु" इत्यत्र "आपो भवन्तु" इति पठ्यते। व्याख्यानमुक्तं ग्रहहोमे (२,१६) ॥४८

इति भट्ट-श्रीगुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये षष्ठ खण्डम्।

---

1 मे—धेनुवत्सोपदर्शने।

आकृष्णेन०...॥१

सूर्यार्घ्यमन्त्रोऽयम्। व्याख्यातश्च ग्रहहोमे (२,१०)॥१

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**

**स भूमिं सर्वतस्पृत्वा अत्यतिष्ठद्दशाङ्गुलम्॥२**

इयञ्च "षोडशर्चस्य मन्त्रस्य ऋषिर्नारायणः स्मृतः।

छन्दोऽनुष्टुप् त्रिष्टुबन्ते देवता पुरुषः स्मृतः॥

विनियोगः पुरुषमेधप्रोक्षणीयपुरुषस्तुतौ।

आद्ययावाहयेद् देवम्॥"

इत्यादिनरसिंहपुराणवचनात् भगवत्पूजायामपि उपयुज्यते। 'पुरुषः' नाभेरूर्ध्वं 'दशाङ्गुलम्' 'अति' अतिक्रम्य 'अतिष्ठत्', अर्थात् हृत्पद्ममध्ये विज्ञानरूपः स्थितः। किम्भूतः? 'सहस्रशीर्षा', सहस्र-शब्दः असंख्यातवचनः, असंख्यातमूर्धा। तथा 'सहस्राक्षः', अक्षाणि बुद्धीन्द्रियाणि समनस्कानि षड्च्यन्ते, तथा 'सहस्रपात्' पादशब्देन कर्मेन्द्रियाणि पञ्च उच्यन्ते। एतेन त्रैलोक्योदरवर्तिनां प्राणिनां यानि शरीराणि सबुद्धीन्द्रियाणि सकर्मेन्द्रियाणि च तानि सर्वाणि अस्यैव पुरुषस्य इत्यर्थः। अत एव अयं सहस्राक्षः सहस्रपात् सहस्र-शीर्षा च। कथम् अतिष्ठत्? 'भूमिं' 'सर्वतः' 'स्पृत्वा' व्याप्य, भूमि-शब्दो भूम्यारब्धप्राणिदेहवचनः, तथा च त्रैलोक्यवर्तिनां पार्थिव-देहान् व्याप्य इत्यर्थः। सहस्रशीर्षत्वादिना यद् व्यापकत्वम् उप-क्रान्तं तत् अनेन स्फुटीकृतं, सर्वदेहिनां हृदयस्थं विज्ञानस्वरूपं पुरुषं सहस्रशीर्षत्वादिस्वरूपोत्कीर्तनेन अभिमुखीकृत्य सः अस्यां मम क्रियमाणायां पूजायां सान्निध्यं कल्पयतु इत्याशंसावाक्यार्थः। अत्र नाभेरूर्ध्वं दशाङ्गुलम् अतिक्रम्य हृदयं भवति इति अनुभवसिद्धम्, तत्र च एषः तिष्ठतीति। "यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः"

इति मनुवचनं प्रमाणम्। धृत्वा इति "धृङ व्यायामे"। सर्व्वतम् इति कस्कादित्वात् सत्वम् ॥२

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥३

'इदं' यत् वर्तमानकालीनं, 'यत्' च 'भूतम्' अतीतकालीनं, तत् 'सर्वं' 'पुरुष एव'। एतेन कालत्रयगोचरो भगवान् आविष्कृतस्वरूपः इति दर्शितम्। तथा 'यत्' 'अन्नेन' अदनीयेन 'अतिरोहति' जन्म लभते, जङ्गमरूपं भक्ताद्याहारेण स्थावररूपं जलसन्तर्पणादिना, तदपि सर्वं पुरुष एव इत्यर्थः। किम्भूतः सः पुरुषः? 'अमृतत्वस्य' मोक्षस्य 'ईशानः' प्रभुः, मोक्षदाता स एव इत्यर्थः। अत्रापि अनेन मन्त्रेण अभिमुखीकृतो भगवान् अस्मिन् कुसुमादिमये मयोपनीते आसने सान्निध्यं कल्पयतु इति आशास्यते ॥३

एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥४

'अस्य' पुरुषस्य 'एतावान्' 'महिमा' यत् पूर्वोक्तं सर्व-देश-काल-व्यापकं संसारापवर्गप्रभुरूपत्वञ्च। 'अतः' अस्मात् कारणात् 'पूरुषः' 'ज्यायान्' श्रेष्ठः। अतः 'अस्य' 'विश्वा भूतानि' सर्वाणि पञ्च भूतानि पृथिव्यादीनि 'पादः'। अपरञ्च 'अस्य' 'त्रिपात्' पादत्रयम् ऋग्-यजुः-सामात्मकं सूर्यस्वरूपं 'दिवि' 'अमृतं' मोक्षद्वारं मुमुक्षूणां सूर्यमण्डलभेदनद्वारेण[1] गच्छतां परमात्मनि लयात् मोक्षद्वारम् इति भावः। येनास्य भगवतो विश्वं पादः तेन पाद्यं दीयते

---

1 क्वा—सूर्यमण्डलभेदेन।

पादं स्तुत्वा इति। विश्वा इति "शेश्छन्दसि बहुलम्" (पा० ६,१,७०) इति शेलोपः ॥४

**त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः।**
**ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥५**

अस्य चतुष्पाल्लक्षणस्य पुरुषस्य यः असौ 'त्रिपात्' 'पुरुषः' ऋग्-यजुः-साम-लक्षणः भगवान् आदित्यः, स 'ऊर्ध्वः' स्थावरजङ्गमानां कर्मबन्धनिबद्धानामुपरि स्थितः 'अभ्युदैत्' अभ्युदितवान्; किञ्च 'अस्य' चतुष्पाल्लक्षणस्य 'पादः' चतुर्थः अंशः 'इह' जगति हिरण्यगर्भतया 'अभवत्' प्रथमतः सत्तामात्रेण आत्मानम् अकरोत्। किम्भूते जगति? 'साशनानशने' भोक्तरि च अभोक्तरि च; येषां सुकृते अधिकारः ते भोक्तारः ब्राह्मणादयः, येषाम् अनधिकारः ते अभोक्तारः कृमि-कीट-प्रभृतयः; तदेवं कर्मवति अकर्मवति च जगति पादो व्यापकतया अभवत्। प्रथमं सत्तामात्रेण अतिष्ठत्। 'ततः' अनन्तरं 'व्यक्रामत्' व्याप्तवान् कर्मिणाम् अकर्मिणाञ्च शरीराणि व्याप्य अवस्थानम् अकरोत्। कीदृशः? 'विष्वङ्' वि सु-शब्दौ निपातौ सर्वतः इत्यर्थे वर्तेते "सुञः" (पा० ८,३,१०७) इति षत्वम्, ततः "वि-सु अञ्चति" इति ऋत्विगादिसूत्रेण (पा० ३,२,५९) क्विन्, "अनिदिताम्०" (पा० ६,४,२४) इत्यनुनासिकलोपः, प्रथमैकवचनम्, "उगिदचाम्" (पा०७,१,७०) इति नुम्, हल्ङ्यादिलोप-संयोगान्तलोपौ, "क्विन्प्रत्ययस्य कुः" (पा० ८,२,६२) इति नस्य ङः, सर्वतोगामीत्यर्थः। अभ्युदैत् इति व्यवहितोपसर्गसम्बन्धः। अत्र च यो भगवान् अहरहः अभ्युदेति नित्यातिथिरूपतया स्तूयते तस्मै अर्घ्यम् अनेन दीयते ॥५

**ततो विराड़जायत विराजोऽधि पूरुषः।**
**स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥६**

'ततः' पुरुषात् हिरण्यगर्भात् 'विराट् अजायत' ब्रह्मा अभवत्। तस्मात् 'विराजः' ब्रह्मणः 'पूरुषः' मनुः 'अध्यजायत'। 'सः' मनुः 'जातः' सन् 'अत्यरिच्यत' अतिरिक्तो बभूव। कुत्र ? 'पश्चात्' 'पुरः' 'अथो' 'भूमिम्'। अत्र पश्चात्-पुर शब्दौ भूत-भविष्यत्कालोपलक्षकौ, भूमिशब्दो देशोपलक्षकः। तदयमर्थः—स मनुः पुत्रपौत्रादि-सन्तत्या सर्वत्र जगति पूर्वान् परांश्च अतिचक्राम इति। तदेवम्भूतो भगवान् आचमनीयं गृह्णातु इत्याशास्यते ॥६

**तस्माद् यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।**
**पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥७**

येन चतुर्थपादेन विश्वमेतद् व्याप्तं 'पादोऽस्येहाभवत् पुनः' (७।५) इत्यनेन प्रतिपादितं 'तस्मात्' पादात् 'यज्ञात्' यज्ञस्वभावात्[1] 'सर्वहुतः' सर्वैः हूयमानात्, ल्यब्लोपे पञ्चमी, सर्वैः हूयमानं यज्ञम् अभिसन्धाय, 'पृषदाज्यं' 'सम्भृतं' हविः उत्पन्नम्। तत् हविः कर्तृ 'ये' 'आरण्याः' ये च 'ग्राम्याः' 'तान्' 'पशून्' 'वायव्यान्' वायुदैवतान् 'चक्रे' अकरोत्। हविषः परिणतिजनितत्वाज्जगत इति भावः[1]। अनेन च पुरुषम् अभिमुखीकृत्य अस्माभिः कार्यमाणं स्नानं भगवान् गृह्णातु इत्याशास्यते ॥७

**तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥८**

'तस्मात्' उक्तप्रकारात्[1] यज्ञार्थम् ऋग्वेदः, सामवेदः, 'छन्दांसि' गायत्र्यादीनि, यजुर्वेदश्च 'अजायत'। पूर्ववदत्रापि यज्ञादिति पञ्चमी[1]। एतेन ब्राह्मणाद्यावरणभूता त्रयी, सकलमन्त्राच्छादनभूतं

1 व्याख्यानमिदं प—पुस्तकादन्यत्र न दृश्यते।

छन्दः, भगवत एव समुत्पन्नम्। त्रयी वर्णानां प्रावरणम् इत्युक्तं विष्णुपुराणे—

"सर्वेषामेव वर्णानां त्रयी प्रावरणं स्मृतम्।

तामुत्सृजन्ति ये मोहान्नग्नास्ते परिकीर्तिताः॥" इति।

छन्दसामाच्छादकत्वे योगियाज्ञवल्क्यः—

"छादनात् छन्द इत्युक्तं वाससी इव चाकृतेः।"

तदयमर्थः—त्वत्त एव उत्पन्नम् आच्छादनं तुभ्यं ददानि[1] इति।८

**तस्मादश्वा अजायन्त ये के चोभयादतः।**

**गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः॥९**

'तस्मात्' पुरुषात् 'अश्वाः' 'अजायन्त' उत्पन्नाः[2] 'ये के च' 'उभयादतः' उभयतोदन्ताः पशवः, 'गावः', 'अजावयः' छागमेषाद्याश्च अजायन्त इति पूर्वेणैव सम्बन्धः[3]। 'ह' शब्दः[3] समुच्चये। उभयादतः इति "अन्येषामपि दृश्यते" (पा० ६,३, १३७) इति दीर्घः। अत्रापि सकलयज्ञसाधनोत्पत्तिकारणं भगवान् यज्ञसूत्रं दीयमानं गृह्णातु इति वाक्यार्थः[4]॥९

**तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।**

**तेन देवा अयजन्त साध्या ऋषयश्च ये॥१०**

'तं' पुरुषं 'यज्ञं' यज्ञसाधनत्वात् यज्ञस्वरूपम्[5] 'बर्हिषि' कुशे संस्थाप्य 'देवाः' ब्रह्मप्रभृतयः, 'साध्याः' देवभेदाः, 'ऋषयश्च ये' मरीचि-

---

1 मै—ददामि।

2 अधिकमिदं व्याख्यानं प—पुस्तके।

3 भा—चशब्दः।

4 मन्दर्भोऽयं भ—पुस्तकमात्रलभ्यः।

5 मै—"यज्ञसाधनभूतम्" इत्येतावन्मात्रम्।

प्रभृतयः ते 'प्रोक्षन्' प्रोक्षितवन्तः। तथा 'तेन' यज्ञसाधनभूतेन पुरुषेण 'अयजन्त'। किम्भूतं पुरुषम्? 'अग्रतः' प्रथमतः 'जातम्'। प्रोक्षणग्रहणं सकल[1]साधनोपलक्षणम्। तदयमर्थः—पुरुषं पृषदाज्यादिरूपेण[2] यज्ञसाधनभूतं संस्कृत्य[3] देवताद्याः[4] इष्टवन्तः, अतः स भगवान् दीयमानं गन्धं गृह्णातु इत्याशास्यते ॥१०

**यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।**
**मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ॥११**

ब्रह्मादयो देवाः 'यत्' यज्ञसाधनं 'पुरुषं' 'व्यदधुः' चक्रुः। 'कतिधा' कतिप्रकारं 'व्यकल्पयन्' विशेषेण कल्पितवन्तः तस्य कतिधा भेदं कृतवन्तः? 'अस्य' 'मुखं' 'किम् आसीत्'? 'किं बाहू'? 'किम् ऊरू'? 'पादौ' च किम् 'उच्येते'? वक्ष्यमाणकण्डिकाभिः पुरुषस्तुतौ आकाङ्क्षाजनकतया इयमपि स्तुतिरेव इति संस्तुत्य पुष्पं दीयते ॥११

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥१२**

निगदव्याख्यातोऽयम्[5]। 'यत्' वस्तु 'वैश्यः' 'तदस्य' 'ऊरू'। अत्रापि वर्णचतुष्टयमयो भगवान् धूपं गृह्णातु इति ॥१२

**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।**
**श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१३**

पूर्ववदेव व्याख्यातप्रायमिदं निगदनेन[5]। चक्षोः इति सलोप-

---

1 प—मनः।　　2 प—०सूतेण।
3 प—संस्तुत्य।　　4 भ—मै—देवाः।
5 भ—मै—निगदोऽयम्।

श्छान्दसः। चन्द्र-सूर्य-वायुभ्यो मन-श्चक्षुः-श्रोत्र-प्राणानाम् उत्पत्तिः इति सृष्टिक्रमः। अत्र तु अचिन्त्यमहिम्नि पुरुषे[1] विपरीतमेतत्। अतः पुरुषस्तुतिरेव वाक्यार्थः। अत्र चन्द्र-सूर्याग्नीनाम् उत्पादकः अयं भगवान् सर्वतेजोमयः इति तेजोरूपः प्रदीपः अनेन दीयते ॥१३

**नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।**
**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४**

नाभेः आकाशं, मूर्ध्नो द्यौः, पादाभ्यां पृथिवी, श्रोत्रात् दिशः समवर्तन्त तस्य पुरुषस्य। अतः स 'तथा' तेन प्रकारेण 'लोकान्' 'अकल्पयन्' अकल्पयत्। लोकाँ इति पूर्ववत् रुत्वादि। अकल्पयन् इति व्यत्ययेन बहुवचनम्। अनेन अभिमुखीकृत्य नैवेद्यं दीयते ॥१४

**यत् पुरुषेण हविषा देवा यज्ञमतन्वत।**
**वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥१५**

'पुरुषेण' 'हविषा' पशुभूतेन 'देवाः' पूर्वोक्ताः ब्रह्मादयः 'यत्' यज्ञम् 'अतन्वत' कृतवन्तः, 'अस्य' यज्ञस्य 'वसन्तः' 'आज्यं' घृतम् 'आसीत्', 'ग्रीष्मः' 'इध्मः' समिद्विशेषः आसीत्, 'हविः' पुरोडाशादिकं 'शरत्' आसीत्। अस्य मन्त्रस्य स्तावकत्वात् अञ्जलिकरणं युक्तमेव ॥१५

**सप्तास्यासन् परिधय स्त्रिःसप्त समिधः कृताः।**
**देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥१६**

'यद् यज्ञं' यं यागं 'तन्वानाः' कुर्वाणाः 'देवाः' ब्रह्मादयः 'पुरुषं' 'पशुं' पशुभूतम् 'अबध्नन्' हृतवन्तः, 'अस्य' यज्ञस्य 'सप्त' समुद्राः

---

1 प—निरञ्जनतया इत्यधिकम्।

'परिधयः' यागभूमिवेष्टनानि आसन्, 'त्रिःसप्त' छन्दांसि—सप्त छन्दांसि, सप्त अतिच्छन्दांसि, सप्त व्याहृतयः—'समिधः' कृताः। अत्र अस्य यज्ञमयस्य विष्णोः सप्त समुद्राः प्रदक्षिणेन वेष्टनद्रव्याणि। तं प्रदक्षिणयताम् सप्तसमुद्रवेष्टितपृथिवीप्रदक्षिणफलं भवतु इति प्रदक्षिणमन्त्रोऽयम् ॥१६

यज्ञेन यज्ञमयजन्त देवा-
स्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त
यत्र पूर्वे साध्याः सन्ति देवाः ॥१७

'देवाः' ब्रह्मादयः 'यज्ञेन' यज्ञसाधनभूतेन पुरुषेण 'यज्ञं' यज्ञपुरुषं पुरुषोत्तमम् 'अयजन्त' पूजितवन्तः। कुत इदं[1] हिंसात्मकेन कर्मणा पुरुषं पशुं कृत्वा यज्ञः क्रियते ? तत्रोच्यते—'तानि' 'धर्माणि' 'प्रथमानि' 'आसन्'। अत एव 'ते' देवाः एवंरूपेण यज्ञेन इष्ट्वा 'नाकं' स्वर्गं 'सचन्त' सङ्गताः। 'यत्र' स्वर्गे 'साध्यादयो' देवाः 'महिमानः' महात्मानः 'पूर्वे' आद्याः 'सन्ति'। 'ह' शब्दः पादपूरणे। महिमानः इति धर्मशब्देन धर्मो भण्यते। सचन्त इति "बहुलं छन्दस्यमाङ्योगेऽपि" (पा० ६,४,७५) इत्यडागमाभावः। अत्र च देवानां स्वर्गो निवासः इति वासुदेवस्मरणात् स भगवान् अस्माभिः पूजितः स्वस्थानं स्वर्गं पुनर्यातु इति विसर्जनमन्त्रोऽयम् ॥१७

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च
विश्वकर्मणः समवर्तताग्रे।

---

1 मी—कुतः एतद् इदम्।

तस्य त्वष्टा विदधद्रूपमेति
तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१८
वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यते अनाय[1] ॥१९
प्रजापतिश्चरति गर्भे अन्त-
रजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरा-
स्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥२०
यो देवेभ्य आतपति यो देवानां पुरो हितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२१
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात् तस्य देवा असन् वशे ॥२२
श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥२३

उत्तरनारायणदृष्टाः इमाः षड़्चः—तिस्रः त्रिष्टुभः द्वे अनुष्टुभौ अन्त्या त्रिष्टुप्—आदित्योपस्थाने विनियुक्ताः ।

---

1 "विद्यतेऽयनाय" इत्याकरपाठः ।

'त्वष्टा' आदित्यः 'अद्भ्यः' जलात्, 'पृथिव्यै' पृथिवीतः, 'अग्रे' प्रथमं 'सम्भृतः' समुत्पतितो बभूवेति यावत्[1]। अत्र जलपृथिवीत्युपलक्षणं तेन पञ्चमहाभूतोत्पत्तिपूर्वकाले एव त्वष्टा सम्भृतः। न केवलं पञ्चभूतेभ्य एव प्रथमं त्वष्टा सम्भृतः, अपि तु 'विश्वकर्मणः' 'रसात् च' अग्रे 'समवर्तत', रसः इच्छा, यदैव विश्वनिर्माणेच्छा नहि भवति तदैव भूत इत्यर्थः। 'तत्' 'तस्य' त्वष्टुः मण्डलाकारं 'रूपं' 'मर्त्यस्य' 'आजानं' मनुष्याणां सृष्टितोऽपि प्रथमं 'देवत्वं' 'विदधत्' धारयत् 'एति' समागच्छति। आजानमिति आ जानात् आ उत्पत्तेः, जान इति जनेर्घञ्[1] ॥१८

'अहम्' 'एतं' 'पुरुषं' पुरुषोत्तमं 'वेद' जानामि। 'महान्तं' सर्वव्यापकम्, 'आदित्यवर्णं' ज्योतिर्मयं, 'तमसः' अविद्यात्मकसंसारात् 'परस्तात्' परम् उत्तीर्णम्। 'तमेव' एवंस्वरूपं पुरु' 'विदित्वा' 'अतिमृत्युम्' मरणमतिक्रम्य 'एति' गच्छति अपुनरावृत्तये। 'अनाय' अयनाय गमनाय 'अन्यः' 'पन्थाः' 'न' 'विद्यते'। अनाय इति यलोपश्छान्दसः। अयमेव दृश्यमानः आदित्यः ध्यानगम्यः पुरुषः, स एष ज्ञातो मोक्षं ददातीत्यर्थः ॥१९

'प्रजापतिः' सूर्यः 'अन्तः' 'चरति' प्राणिनां देहमध्ये जीवात्मरूपेण वसतीत्यर्थः। अतः अयं 'गर्भे' 'अजायमानः' अपि नित्यत्वात् अनुत्पत्तिधर्मापि 'बहुधा विजायते' बहुप्रकारं स्थावरजङ्गमदेहेषु जन्म लभते इत्यर्थः। 'तस्य' प्रजापतेः 'योनिम्' उत्पत्तिस्थानं 'धीराः' 'परिपश्यन्ति' ब्रह्मविदः उपलभन्ते। ब्रह्मैव उत्पत्तिस्थानं यतः अतः 'तस्मिन्' प्रजापतौ 'विश्वा' सर्वाणि 'भुवनानि' 'तस्थुः'। विश्वा इति पूर्ववत् शिलोपः। 'ह'शब्दः अव्ययं पादपूरणे ॥२०

---

1 व्याख्यानांशोऽयं भ—मे—पुस्तकयोर्न पठ्यते।

'यः' रविः 'देवेभ्यः' देवतार्थम् 'आतपति', उदिते हि सूर्ये कर्मणाम् अनुष्ठानेन देवा आप्याय्यन्ते अतः देवार्थमुदेत्यसौ[1]। तथा 'यः' 'देवानां' 'पुरः' अग्रतः आ'हितः' हविर्दानाय प्रथमम् अग्निरूपेण अवस्थितः। 'यः' च 'देवेभ्यः' 'पूर्वः' प्रथमतो 'जातः' उत्पन्नः, अदितेः द्वादशात्मा आदित्य प्रथमम् उत्पन्नः इत्यर्थः। अतः तस्मै 'रुचाय' रोचमानाय[2], 'ब्राह्मये' ब्रह्मणः अपत्याय परमब्रह्मसम्भूताय[3] 'नमः'। रुचाय इति इगुपधलक्षणः कः ( पा० ३,१,१३५ )। ब्राह्मये इति बाह्वादित्वात् इञ् ॥२१

'देवाः' ब्रह्मादयः 'जनयन्तः' स्वयम् उपद्यमानाः 'तत्' तं 'ब्राह्मं' ब्रह्मणः उत्पन्नं 'रुचं' प्रकाशरूपम् आदित्यम् 'अग्रे' प्रथमम् 'अब्रुवन्' उक्तवन्तः अयमेव अस्माकं मुख्यः इति प्रोक्तवन्तः। हे पुरुषोत्तम! 'त्वा' त्वां एवमनेन मन्त्रेण उक्तविश्वरूपं 'यः' 'ब्राह्मणः' 'विद्यात्' जानीयात् 'तस्य' ब्राह्मणस्य 'वशे' इच्छायां 'देवाः' 'असन्' भवन्ति। इमम् अध्यायम् अर्थतो ग्रन्थतश्च अधीत्य यः परमेश्वरं जानाति तस्य अभिलषितम् अर्थं देवाः सम्पादयन्तीत्यर्थः ॥२२

हे पुरुषोत्तम! 'ते' तव 'श्रीः' धनदानम् यद्वशात् पुरुषः अनुजीविनाम् आश्रयणीयो भवति, 'लक्ष्मीः' धनम् यद्वशात् पुरुषः सर्वलोकस्य लक्ष्यो दर्शनीयो भवति, ते इमे श्री-लक्ष्म्यौ 'पत्न्यौ' सहचारिण्यौ त्वां न त्यजत इत्यर्थः। 'अहोरात्रे' 'पार्श्वे' अहःशब्दः परब्रह्मपरः तस्य विद्यात्मकत्वेन प्रकाशरूपत्वात्, रात्रिशब्दश्च संसारपरः अविद्यात्मकत्वेन अप्रकाशरूपत्वात्, एतेन संसारो मोक्षश्च परमेश्वरस्य पार्श्वद्वयम् इत्युक्तं भवति। 'नक्षत्राणि' 'रूपम्' तारागणो मूर्त्तिः। 'अश्विनौ' द्यावापृथिव्यौ तव 'व्यात्तं' विवृतम् इत्यर्थः।

1 "अत" इत्यादिकं प—पुस्तक एव पठ्यते।

2 प—शोभमाय।

3 मे—सम्भृताय।

तथा च श्रुतिः "इमे ह्रीदं सर्वमाप्नुवाताम्"[1]। एवम्भूतं पुरुषोत्तमं त्वां याचे—त्वम् 'इषाण्' इच्छन्तं सकामं माम् 'इषाण' इच्छ। 'अमुम्' इहलोकं 'मे' मम 'इषाण' इच्छ पुत्रपौत्रादिसन्तत्या। न केवलम् अमुं लोकं 'सर्वलोकं' भूरादिसत्यपर्यन्तं 'मे' मम 'इषाण' स्वर्गमोक्षप्रदानेन। अयमर्थः—यः खलु स्वर्गादि पुत्रादि कामयन् अनेन अध्यायेन त्वां पूजयति[2] स्तौति नमस्कुरुते तम् इच्छ अवधारय, ततस्तस्य पुत्रपौत्रादिसन्तत्यात्मकम् इहलोकम इच्छ, परलोकमपि स्वर्गमोक्षात्मकम् इच्छ। तव च इच्छामात्रेण सर्वं सम्पद्यते सत्येच्छत्वात् तव इति भावः। पत्नया इति आवादेशे कृते "लोपः शाकल्यस्य" (पा० ८,३,१९) इति वलोपः। इषान् इति व्यत्ययेन अम्, प्रथमैकवचनञ्च द्वितीयार्थे। इषाण इति "हलः श्नः शानज्झौ" (पा० ३,१,८३) इति शानच्। तदेवं सूर्यस्य ब्रह्मप्रमतत्वेन माहात्म्योत्कीर्तनात् ब्रह्मणश्च पुरुषरूपत्वात् पुरुषसूक्ताध्याये इमा अपि षड्चः अभिधीयन्ते॥ २३

इति भट्ट-श्रीगुणविष्णुकृते छान्दोग्यमन्त्रभाष्ये सप्तमं खण्डम्।

---

1 आ—सर्वमाप्नुवन्तौ। मी—सर्वं प्राप्नुवाताम्।

2 आ—यः खलु स्वर्गादिकामनया अनेन त्वां पूजयति।

अग्नये स्वाहा ॥१[1]

विश्वेभ्यो देवेभ्यः स्वाहा ॥२

प्रजापतये स्वाहा ॥३

अग्नये स्विष्टिकृते स्वाहा ॥४

निगदव्याख्याताः[2] एते। 'स्विष्टिकृत्' शोभनयागकारी ॥१—४

देवकृतस्यैनसोऽवयजनमसि स्वाहा ॥५

पितृकृतस्यैनसोऽवयजनमसि स्वाहा ॥६

मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥७

आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ॥८

यद्दिवा च नक्तञ्चैनश्चकृम तस्यावयजनमसि स्वाहा ॥९

यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा ॥१०

यद् विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा ॥११

एनस एनसोऽवयजनमसि स्वाहा ॥१२

यजूंषि आग्नेयानि। हे अग्ने! 'देवकृतस्य' देवकर्मविषये असा-

---

1 इतःपरं भ-मै—पुस्तकयोः "धन्वन्तरये स्वाहा" इत्यधिको मन्त्रः पठ्यते।

2 भ-मै—निगदाः।

ङ्गतादिकृतस्य 'एनसः' पापस्य त्वम् 'अवयजनम्' 'असि' भवसि। अव-पूर्वो यजिः नाशने वर्त्तते ॥५

'पितृकृतस्य' पितृकर्मणि असाङ्गतादिकृतस्य ॥६

'मनुष्याः' सनकादयः, तेषां तृप्तिः अथितिसेवया भवति, तत्र अयथाचरणेन जातस्य 'एनसः अवयजनम् असि' ॥७

'आत्मकृतस्य' आत्मनिन्दाकृतस्य ॥८

'यत्' पापं दिवसे रात्रौ च वयं 'चकृम' कृतवन्तः 'तस्य अवयजनम् असि' ॥९

'स्वपन्तः' शयानाः, 'जाग्रतः' जागरूकाः ॥१०

'विद्वांसः' जानन्तः, 'अविद्वांसः' अजानन्तः ॥११

'एनसः' पापस्य संसर्गेण यत् पुनः पुनः उपजायते तस्य 'अवयजनमसि' ॥१२

**विश्वे देवास आगत शृणुता म इमं हवम्।**
**एदं बर्हिर्नि षीदत ॥१३**

हे 'विश्वे देवासः'! विश्वे देवाः! यूयं 'मे' मम 'इमं हवम्' इदम् आह्वानं 'शृणुता' शृणुत। श्रुत्वा च 'आगत' आगच्छत। आगत्य च 'इदं' 'बर्हिः' अस्मिन् कुशे आसनार्थोपकल्पिते 'आनिषीदत' उपविशत। विश्वेदेवासः इति "आज्जसेरसुक्" (पा० ७,१,५०)। आगत इति गमेर्लोड्मध्यमपुरुषबहुवचनं, "बहुलं छन्दसि" (पा० २,४,७३) इति शपो लुक्, "अनुदात्तोपदेश" (पा० ६,४,३७) इत्यादिना मकारलोपः[1]। शृणुता इति "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" (पा० ६,३,१३३) इति दीर्घः। इदं बर्हिः इति सप्तम्यर्थे द्वितीया। आनिषीदत इति व्यवहितोपसर्गसम्बन्धः ॥१३

---

1 मे—मलोपः।

विश्वे देवाः शृणुतेमं हवं मे
ये अन्तरिक्षे उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा
आसाद्यास्मिन्[1] बर्हिषि मादयध्वम् ॥१४

हे 'विश्वे देवाः'! यूयं 'मे' मम 'इमं हवम्' इदम् आह्वानं 'शृणुत'। किम्भूताः यूयम्? 'ये' 'अन्तरिक्षे' 'स्थ' तिष्ठथ, 'ये' 'उप' समीपे पृथिव्याम्, 'द्यवि' स्वर्गे; द्वयोरपि स्थ इत्यनेन सम्बन्धः। तदयमर्थः—भूमौ आकाशे स्वर्गे च स्थिताः ये विश्वे देवाः। के ते? 'ये' 'अग्निजिह्वाः' अग्निः जिह्वा हविर्भोजनसाधनं येषाम्, 'उत वा' अपिच 'यजत्राः' यजन्तं श्राद्धकारिणं ये त्रायन्ते रक्षन्ति पुरूरवः-प्रभृतयः। 'अस्मिन्' 'बर्हिषि' कुशे 'आसाद्य'[2] उपविश्य 'मादयध्वम्' हर्षयुक्ताः भवथ। ष्ठ इति अस्तेर्लङ्मध्यमपुरुषबहुवचनम्, "श्नसोरल्लोपः" (पा० ६,४,१११) इत्यकारलोपः "पूर्वपदात्" (पा० ८,३,१०६) इति षत्वं ष्टुत्वं। यजत्राः इति "त्रैङ् पालने" "आतोऽनुपसर्गे कः" (पा० ३,२,३)। मादयध्वम् इति "मदी हर्षे" स्वार्थे णिच्[3]।१४

ओषधयः समवदन्त सोमेन सह राज्ञा।
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ॥१५

'ओषधयः' तिल-व्रीह्यादयः 'सोमेन' चन्द्रेण 'राज्ञा' ओषधीनाम् ईशेन 'सह' 'समवदन्त' स्थिरीभूताः। "वदस्थैर्ये"। या ओषधयः

---

1 मै—भासद्यास्मिन्। 2 मै—भासद्य।

3 प—"मोदं कुरुतेति अर्थवत्। अथवा श्राद्धकारिणं मादयध्वम् तत्पितृणामभीष्टलोकतृप्त्या भवतामुपदर्शनेति" इत्यधिकम्।

आद्धे दीयन्ते ताः सोमेन अमृतमयेन सह ऐक्यम् आपन्नाः अमृतमयीभूताः इति यावत्। तथा 'ब्राह्मणः' आद्धभोक्ता 'यस्मै' देवाय पुरूरवःप्रभृतये 'कृणोति' भोजनमिति शेषः। हे 'राजन्'! सोम! 'तं' देवं वयं 'पारयामसि' आप्याययामः। पारयामसि इति "इदन्तो मसि" (पा० ७,१,४६) इति इकारान्तता ॥१५

एत पितरः सोम्यासो
गम्भीरेभिः पथिभिः पूर्विणेभिः।
दत्तास्मभ्यं द्रविणेह भद्रं
रयिञ्च नः सर्ववीरं नियच्छत ॥१६

हे 'पितरः'! 'इह' पितृयज्ञे यूयम् 'एत' आगच्छत। किम्भूताः? 'सोम्यासः' सोम्याः सोमार्हाः इति यावत्। कैः आगच्छत? 'पथिभिः' मार्गैः। किम्भूतैः? 'गम्भीरेभिः' गम्भीरैः, तथा 'पूर्विणेभिः' पूर्वपुरुषाचरितैः। आगत्य च 'अस्मभ्यं' 'द्रविणं' द्रविणानि नानाविधानि धनानि 'दत्त' प्रयच्छत, येवयं निर्वृताः[1] सन्तः युष्मदाराधनयोग्याः भवाम। तथा 'भद्रं' कल्याणं 'रयिं च' धनञ्च 'नियच्छत' नितरां ददध्वम्। किम्भूताः यूयम्? 'सर्ववीरं' सर्ववीराः सर्वे च वीराश्चेति सर्ववीराः। सोम्यासः इति सोमम् अर्हतीति "दण्डादिभ्यो यः[2]" (पा० ५,१,६६) यप्रत्ययः, पूर्ववत् असुक्। गम्भीरेभिः इति "बहुलं छन्दसि" (पा० ७,१,१०) इति ऐस् न भवति। पूर्विणेभिः इति "पूर्वैः कृतमिन-यौ च" (पा० ४,४,१३३) इति इनप्रत्ययः। द्रविण इति "सुपां सुलुक्"० (पा० ७,१,३८) इति शसो लुक्। सर्ववीरम् इति व्यत्ययेन जसोऽम् ॥१६

1 मै—निर्वृत्ताः। 2 मै—पुस्तके सूत्रमेतन्न पठितम्।

उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।
उशन्नुशत आवह पितॄन् हविषे अत्तवे ॥१७

हे अग्ने ! प्रागनुवर्तमानः अग्निरत्र सम्बोध्यते । 'त्वा' त्वां 'निधीमहि' आरोपयामः वयम् इत्यर्थात् । किम्भूताः वयम् ? 'उशन्तः' इच्छन्तः । 'उशन्त' एव त्वां 'समिधीमहि' समिद्धं करवाम । एवञ्च 'उशन्' इच्छन् सन् त्वं 'पितॄन्' 'उशतः' इच्छतः 'आवह' आनय । किमर्थम् ? 'हविषे' 'अत्तवे' श्राद्धे देयं हविः घृतादिकम् अत्तुम् । हे अग्ने ! अस्माभिः आधान-समिन्धनाभ्याम् आराधितः[1] त्वम् अस्माकं पितॄन् श्राद्धदेयहविःप्राशनार्थम् आवह इति वाक्यार्थः । निधीमहि इति "बहुलं छन्दसि" (पा० २,४,७७) इति शपो लुक्, समिधीमहि इति "ञि इन्धी दीप्तौ", उभयत्र लिङ् महिङ् । उशन्तः इति "वश-कान्तौ" लटः शतृ, ग्रहिज्यादिसूत्रेण (पा० ,१,१६) सम्प्रसारणम् । हविषे इति द्वितीयार्थे चतुर्थी । अत्तवे इति "तुमर्थे सेसेनसे" (पा० ३,४,९) इत्यादिना तवेन् ॥१७

आयन्तु नः पितरः सोम्यासो
अग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन् यज्ञे स्वधया मदन्तो
अधिब्रुवन्तु ते अवन्त्वस्मान् ॥१८

'नः' अस्माकं 'पितरः' 'आयन्तु' आगच्छन्तु । 'सोम्यासः' सोमार्हाः सोमपाः । न केवलं सोमपाः 'अग्निष्वात्ताः' च अग्निना स्वदिताः अग्निदग्धाः इत्यर्थः अनग्निदग्धानाम् अनधिकारात् । कैरागच्छन्तु ? 'पथिभिः' । कीदृशैः ? 'देवयानैः' देवाः यैः गच्छन्ति

---

1 पा—आरोपितः ।

तैः। आगत्य च 'ते' पितरः 'अस्मिन्' 'यज्ञे' श्राद्धरूपे 'स्वधया' पितॄणाम् अन्नेन 'मदन्तः' तृप्यन्तः 'अस्मान्' 'अधिब्रुवन्तु' अधिकं ब्रुवन्तु श्लाघन्ताम् इति यावत्। तथा 'अवन्तु' रक्षन्तु ॥१८

अपहता असुरा रक्षांसि वेदिषदः ॥१९

'असुराः' 'वेदिषदाः' श्राद्धभूमिष्ठाः, 'रक्षांसि' राक्षसाश्च 'अपहताः' अपसारिताः। अनेन विकीर्णतिलेन श्राद्धभूमिष्ठाः असुराः राक्षसाश्च निराकृताः इत्यर्थः ॥१९

पवित्रे स्थो वैष्णव्यौ ॥२०

विष्णोर्मनसा पूते स्थः ॥२१

व्याख्यातौ (१।१०,११) ॥२०-२१

शन्नो देवी०…॥२२

व्याख्यातः (२।६) ॥२२

यवोऽसि यवयास्मद् द्वेषो यवयारातीः ॥२३

त्वं 'यवः' 'असि' अमिश्रताकारणम् असि यतः अतः 'अस्मत्'-सकाशात् 'द्वेषः' कृत्रिमशत्रून् 'यवय' पृथक् कुरु। तथा 'अरातीः' सहजशत्रून् 'यवय'।[1] वेदे अरातिशब्दः स्त्रीलिङ्गोऽपि दृश्यते। यतः त्वं यवः पृथक्कारी अतः अस्मत्सकाशात् शत्रून् पृथक् कुरु। यवय इति "यु मिश्रणे अमिश्रणे च" "ऋदोरप्" (पा० ३,३,५७) ततः तत्करोतीति (ग० सू० २०४) णिच्, लोट्सिप्। द्वेषः इति द्विषेः विच्, गुणः, द्वितीयाबहुवचनम् ॥२३

दिवे त्वा अन्तरिक्षाय त्वा पृथिव्यै त्वा।
शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि ॥२४

---

1 भ—'द्वेषः कृत्रिमशत्रौ स्यादरातिः सहजे स्त्रियेति' इत्यधिकम्।

हे यव! 'त्वा' त्वां 'दिवे' स्वर्गाय, 'अन्तरिक्षाय' आकाशाय, 'पृथिव्यै' भूम्यै उत्क्षिपामि इति शेषः। अतो 'लोकाः' भूर्भुवःस्वरादयः पितरः सीदन्ति येषु ते 'पितृषदनाः' 'शुन्धन्ताम्' निर्मलीभवन्तु[1]। यतः त्वं 'पितॄणां सदनं' गृहमिव 'असि' भवसि अतः त्वत्प्रक्षेपेण लोकाः शुध्यन्तु[2] ॥२४

## तिलोऽसि सोमदेवत्यो गोसवो[3] देवनिर्मितः। प्रत्नमद्भिः[3] पृक्तः[3] स्वधया पितॄँल्लोकान्[3] प्रीणाहि[3] नः स्वाहा ॥२५

'तिलः' त्वं 'सोमदेवत्यः' 'असि' सोमदेवतार्थं जातः असि। तथा 'गोसवः' गां स्वर्गं सूते इति गोसवः। तिलो हि दातुः पापक्षयं कुर्वाणः स्वर्गं जनयति। तथा 'देवनिर्मितः' देवेन विष्णुना निर्मितः विष्णुदेहोद्भवास्तिला इति स्मृतेः[4] स त्वम् 'अद्भिः' 'पृक्तः' मिश्रितः सन् 'नः' अस्माकं 'पितॄन् लोकान्' 'प्रत्नं' चिरन्तनं चिरकालं 'स्वधया' स्वधाकारेण 'प्रीणाहि' तर्पय। 'स्वाहा' तिलप्रक्षेपे। यद्यपि पितृकर्मणि स्वधाकारो युक्तः तथापि कात्यायनेन स्वाहान्तस्यैव अस्य मन्त्रस्य पाठात् अनुपपत्तिर्नाशङ्कनीया[5]। सोमदेवत्यः इति देवतान्तात् तादर्थ्ये यत्। प्रत्नम् इति प्रशब्दात् "[6]नश्च पुराणे प्रात्" (वा०-पा० ५,४,३०) इति त्नप्[6] प्रत्ययः। प्रीणाहि इति "वा छन्दसि" (पा० ३,४,८८) इत्यपित्त्वविकल्पादसति ङित्वे "ई हल्यघोः" (पा० ६,४, ११३) इतीत्वं न ॥२५

---

1 भा—निर्मलीकुर्वन्तु। 2 प—शुध्यन्तीति वाक्यार्थः।

3 'गोसवे' 'प्रत्नवद्भिः' 'प्रक्तः' 'पितॄनिमाँल्लोकान्' 'प्रीणया हि' इत्येते आश्वलायन-गृह्यसूत्रे मुद्रापिताः पाठाः।

4 प—विष्णुदेहोद्भवाः पुण्यास्तिलाः पापप्रणाशनाः। कै -विष्णुदेहोद्भवत्वात्तिलस्य।

5 प—भीजनोपादानात् इत्यधिकम्। 6 प भ-मै—त्र।

या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु ॥२६

'आपः' जलानि 'पयसा' क्षीरेण 'सम्बभूवुः' सङ्गताः बभूवुः माधुर्यशीतलत्वादिना एकीभूताः इत्यर्थः। काः ताः आपः ? 'याः' 'दिव्याः' दिवि भवाः, 'याः' 'अन्तरिक्ष्याः' आकाशभवाः, 'उत' 'याः' 'पार्थिवीः' पार्थिव्यः पृथिव्यां सम्भूताः, 'हिरण्यवर्णाः' हिरण्यं रजतं तत्समानवर्णाः शुक्लाः, 'यज्ञियाः' यज्ञार्हाः। 'ताः' 'आपः' 'नः' अस्माकं 'शिवाः' क्षेम्याः 'भवन्तु', 'शम्' कल्याण्यो भवन्तु, 'स्योनाः' सुखदाः भवन्तु, 'सुहवाः' सुष्ठु ब्राह्मणहस्ते हुता भवन्तु। दिव्याः अन्तरिक्ष्याः इति "भवे च्छन्दसि" (पा० ४,४,११०) इति यत्। पार्थिवीः इति पृथिवीशब्दात् भवार्थे "पृथिव्या ञाञौ" (वा०—पा० ४,१,८५) इति अञ्, ङीप्, "वा च्छन्दसि" (पा० ६,१,१०६) इति जसि पूर्वसवर्णः। सुहवाः इति खल्॥ २६

पितृभ्यः स्थानमसि ॥२७

हे पितृपात्र ! त्वं 'पितृभ्यः' पितॄणां 'स्थानम्' 'असि' आश्रयः[1] भवसि। अतः त्वां[2] न्युब्जो[3]करोमि इत्यर्थः। तथा च स्मृतिः "नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्य[4] आहितम्। आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्"[5] ॥२७

---

1 व्याख्यानपदमिदं प-पुस्तक एव दृष्टम्।

2 मै—'सर्वसंस्रवसहितं प्रपितामहपात्रेणाच्छाद्य' इत्यधिकम्।

3 मै—न्युब्जं।

4 प—पितॄणामर्घ्यमाहितम्।

5 स्मृतिरियं मै-पुस्तके न पठ्यते।

**स्वाहा अग्नये कव्यवाहनाय ॥२८**

'अग्नये स्वाहा'। किम्भूताय ? 'कव्यवाहनाय', कव्यं पितृणाम् अन्नं तत् वहतीति कव्यवाहनः। "कव्य-पुरीष-पुरीष्येषु ञ्युट्" (पा० ३,२,६५) ॥२८

**स्वाहा सोमाय पितृमते ॥२९**

सोममण्डलाधारत्वात् पितृणां[1] पितृमान् सोमः ॥२९

**पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि[2] स्वाहा ॥३०**

हे अन्न ! अन्नीकरणशेष ! 'ते' तव 'पात्रम्' आधारः 'पृथिवी', 'पिधानम्' आवरणं 'द्यौः' आकाशम्। अतः त्वाम् 'अमृतं' हुतशेषं 'ब्राह्मणस्य मुखे' 'अमृते' अनष्टे अभक्ष्यभक्षणादिदोषरहिते 'जुहोमि'। अत्र 'पृथिवी ते पात्रम्' इत्यनेन भोजनपात्रं स्तुतम्। 'द्यौः पिधानम्' इत्यनेन च अनावृतं हविर्द्रव्यं येन केनापि दृश्यते इत्याशङ्का निराकृता। जुहोमीति होमप्रतिपादनात् स्वाहान्तोऽयं मन्त्रः ॥३०

**इदं विष्णु०......॥३१**

व्याख्यातम् (३।५)। अत्र च विष्णुाक्रान्तत्वात् पृथिव्याः पावनत्वेन तद्विकारस्य अन्नस्य अतिपावनत्वम् ॥३१

**मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः।**
**माध्वीर्नः सन्त्वोषधीः ॥३२**

**मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः।**
**मधु द्यौरस्तु नः पिता ॥३३**

---

1 मी-पुस्तके पदमिदं न मुद्रापितमास्ते।

2 'द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि' इत्यापस्तम्बिनां मन्त्रपाठः।

**मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।**

**माध्वीर्गावो भवन्तु नः ॥३४**

'वाताः' वायवः 'मधु' 'ऋतायते' वहन्तीत्यर्थः। 'सिन्धवः' नद्यः 'मधु' 'क्षरन्ति'। 'ओषधीः' धान्यादयः 'माध्वीः' मधुयुक्ताः 'सन्तु'। 'नः' इति स्थानत्रयेऽपि योज्यम् ॥

तथा 'नक्तं' 'मधु' 'अस्तु' रात्रिः मधुमयी भवतु। 'उत' अपि च 'ऊषसः' अपि मधुमत्यः सन्तु। 'पार्थिवम्' पृथिवीसम्बन्धि 'रजः' 'मधुमत्' अस्तु। 'द्यौः' स्वर्गः 'पिता' पितेव सर्वस्याधिगम्यत्वात् 'मधु' 'अस्तु' मधुमयो भवतु ॥

'वनस्पतिः' च 'मधुमान्' 'अस्तु'। 'नः' इति सर्वत्र योज्यम्। 'सूर्यः' च 'मधुमान्' अस्तु। 'गावः' च 'माध्वीः' मधुमत्यो 'भवन्तु'। 'नः' अस्माकम् ॥

ऋतायते इति वचनव्यत्ययः। माध्वीः इति "ऋत्व्यवास्त्व्ये"-त्यादिना (पा० ६,४,१७५) माध्वीशब्दो निपातितः, "वा छन्दसि" (पा० ६,१,१०६) इति पूर्वसवर्णः। एवम् ओषधीः इत्यत्र। मधुमाँ अस्तु इति पूर्ववत् रुत्वादि ॥३२—३४

**यथासुखं वाग्यताः स्वदत ॥३५**

निगदोऽयम्[1] ॥३५

---

1 प—यथेप्सितं हे विप्राः यूयं वाग्यताः कृतमौनाः सन्तः अन्नमिदमर्थात् भुङ्ध्वम्। भ—निगदोऽयम्। यथेप्सितं हे विप्राः यूयं……सन्तः स्वादुमुत्पादय सुखम्। ततः प-पुस्तके

**'निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया।**

**रक्षांसि यक्षाः सपिशाचसंघा हता मया यातुधानाश्च सर्वे ॥**

अस्यार्थः—यत्किञ्चित् अमेध्यवत् अपवित्रवत् उपहतमिति यावत् भवेत् भवति तत् सर्वं निहन्मि अपसारयामि विनाशयामीति यावत् सुप्रोक्षितमस्तु इत्यभ्युक्षणेन इत्यर्थात्। अत

**अपहता असुरा रक्षांसि वेदिषदः ॥३६**

**एत पितरः सोम्यासो गम्भीरेभिः० ॥३७**

व्याख्याता एतौ (८।२०,१७) ॥३६-३७[1]

---

एव मया श्राद्धकारिणा असुरदानवा अपि प्रसिद्धाः श्राद्धविघ्नकारिणः हताः। ते हि दृष्टिपातेन श्राद्धं विलुम्पन्ति सुप्रोक्षिताभ्युक्षणेन हतवीर्याः सन्तो नात्र प्रवर्तन्त इति तात्पर्यम्। तथा रक्षांसि प्रसिद्धानि यक्षाः लोकविशेषाः पिशाचगणसहिता यातुधानाः एते च सर्वे निहता मयेति सम्बन्धः। रक्षांसि इत्यनेनैव लब्धे यातुधाना इति पृथगुपादानं विघ्नकरणे प्राधान्यख्यापनार्थम्। पिशाचाश्रितत्वेन च सर्वेषामेतेषाममेध्यप्रभावत्वेन अमेध्यस्य चात्र विनाशितत्वात् अपसारणमेव निहननमिति वाक्यार्थः। अपसारणञ्च तेषां सुप्रोक्षिताभ्युक्षणेन। हतवीर्या हि उपसर्तुं विहर्तुञ्च न शक्नुवन्ति अतो निहता इव प्रतिभान्ति इत्याशयः। यद्यपि निहन्मि सर्वं यदमेध्यवद्भवेदित्यनेनैव लभ्यते, सर्वेषां तेषां सत्क्रियाभङ्गहेतुत्वेनामेध्यवत्त्वात्, तथापि पृथगाख्यानं विशेषप्रतिपादनार्थम्। स चायं विशेषः यत् किञ्चिदमेध्यवत् तत् अवस्थानपूर्वकं सत्क्रियां निहन्ति, असुरादयः पुनरप्यवाप्यवस्थिता दृष्टिमात्रेणापि निघ्नन्ति इति दूरत एवापसरणीया इत्याशयः।' इत्यधिकम्।

1 भ—'ततस्तिलैः पृष्ठा अन्नं विकिरेदिति कात्यायनः।

**अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।**
**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥**
**येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति।**
**तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु लोकाय सुखाय तद्वत् ॥**

अस्य मन्त्रद्वयस्यार्थः—मम कुले वंशे ये जीवाः प्राणिनः अग्निदग्धाः लौकिकाग्निना येन केनापि दग्धा एव पिण्डोदकभाजो न भूताः, दुर्भिक्षमरणे ये अदग्धाः दाहं न लब्धवन्तः ते जीवाः अनामका मद्दत्तेन विकारणान्नेन तृप्यन्तु, तृप्ताः सन्तः परां गतिम् उत्कृष्टस्थानं प्रयान्तु। तथा येषां जीवानां मातापितृप्रभृतयो बान्धवा न विद्यन्ते श्राद्धदायिनः तेषामपि तृप्तये मया भुवि पृथिव्यां दत्तमन्नम्। तदन्नेनातितृप्ताः सुखाय लोकाय स्वर्गलोकाय। तादर्थ्ये चतुर्थी।

ततो रेखां कुर्यात्। मन्त्रस्तु **निहन्मि सर्वं०**। अस्यार्थः—यस्मिन् प्रकृते कर्मणि

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो[1] विप्रा नविष्ठया मती योजा न्विन्द्र ते[2] हरी ॥३८

पितरः 'अक्षन्' अन्नादिषुः हवींषि इति शेषः। 'हि' यस्मात् 'ते' 'अवप्रियाः' अवन्ति तर्पयन्ति[3] यानि हवींषि तानि प्रियाणि येषां ते अवप्रियाः। अतः[4] 'अमीमदन्त', स्वार्थे णिच्, अमाद्यन् हर्षम् अलभन्त। तथा 'अधूषत' अकम्पिषत रोमाञ्चयुक्ताः इत्यर्थः। तथा 'अस्तोषत' श्राद्धकर्त्रा पृष्टाः सन्तो भक्ष्यद्रव्याणि अश्लाघिषत[5]। किम्भूताः ते ? 'स्वभानवः' स्वकीयाः भानवः दीप्तयः येषाम् तृप्तिविशे-

---

यदमेध्यवत् यदपवित्रभूतम् अविहिताचरणादिरूपेण यदसाङ्गरूपं तत् सर्वं निहन्मि निरस्यामि। तथा ये अत्रासुरदानवादयो विप्रकारिणः तेऽपि हताः निरस्ताः सर्व एव, अतस्तेषामनवसर इत्यभिप्रायः।

रेखोपरि कुशानास्तीर्य अवनेजयेदिति कात्यायनः। मन्त्रस्तु—

अमुकगोत्र पितरमुकदेवशर्मन्नवनेनिक्ष्व। ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा॥ इति गोभिलोक्तः।

अस्यार्थः—हे पितः त्वमवनेनिक्ष्व मद्दत्तेन तोयेन शुद्धो भव। न केवलं त्वमेव किन्तु अन्येऽपि ये अत्र श्राद्धकर्मणि त्वामनु तव पश्चात् भोक्तारः यांश्च त्वमनु त्वं येषां पश्चाद्भोक्ता असि तस्मै तवानुयायिने ते तुभ्यं नम इति। तस्मै इति बहुवचनस्यैकवचनम्, तेभ्य इत्यर्थः। अवनेनिक्ते पिण्डान् निदध्यादिति कात्यायनः।' इत्यधिकम्।

1 प—सुभानवो।

2 प-मै—विप्रान् विष्ठया मती यो यान् ( मै—यो जान् ) विन्द्रते।

3 प—"पितॄनित्यर्थात्" इत्यधिकम्।

4 मै—ततः।

5 प—"भद्राण्येतानि साधूनि मधुमन्ति चेति" इत्यधिकम्।

षेण दीप्तिविशेषसम्पत्तेः[1]। तथा 'यः' ये पितरः[2] 'विप्राः' पात्रब्राह्मणदेहस्थाः तात्स्थ्येन तच्छब्दप्रयोगः, विप्रशरीरसंस्थाः सर्वमेतच्चक्रुः[3] इत्यर्थः। 'नविष्ठया' 'मती' अत्यन्ताभिनवया बुद्ध्या 'नु' हे 'इन्द्र!' परमैश्वर्ययुक्त सूर्य! 'ते' तव 'हरी' हरीन् अश्वान् 'योजा' एकचित्तीभूय निरूपयन्ति[4]। अमावस्याशेषविभागे[5] चन्द्रमण्डलस्य सूर्यमण्डलादधस्तादवस्थितेः[6] पितॄणां चन्द्रमण्डलाधारत्वात् सूर्याश्वनिरूपणं तेषां युज्यते। एतच्च विसर्जितानां विप्रदेहात् पुनश्चन्द्रमण्डलमुपगतानां तृप्त्या स्वस्थचित्तानां च इत्यूह्यम्[7]। यथा च ते हरीन् निरूपयन्ति तथा अहमपि पिण्डान् सुवर्तुलान् कर्तुं निरूपयामि इति तात्पर्यम्। अक्षन् इति अदेः लुङ् "मन्त्रे घसह्वर"त्यादिना (पा० २,४,८०) च्लेर्लुक्, "गमहन०" (पा० ६,4,९८) इत्युपधालोपः, चर्त्वम्, "शासिवसि०" (पा० ८,०,६०) इति षत्वम्। अधूषत इति "धूङ् कम्पने" गुणाभावः छान्दसः। नविष्ठया इति

---

1 प—भ-टि—सुभानवः शोभनाः भानवः दीप्तयः येषां दृष्टिविशेषेण (भ-टि—पितृविशेषे) दीप्ति-विशेषसम्पत्तेः। मै—स्वभानवः स्वदीप्तयः तृप्तिविशेषसम्पत्तेः।

2 प—'यः इति प्रथमाबहुवचनत्वे कर्तृपदम्' इत्यधिकम्।

3 प—तथा यः यान् हविषः प्रापकान् विप्रान् युष्मान् अयान् आगच्छन् विप्रान् अध्यतिष्ठन् विप्रशरीरसंस्थाः सर्वमेतच्चक्रुरित्यर्थः। भ-टि—तथा ये वो हविषः पावकान् युष्मान् अयान् अगच्छन् पात्रीभूतान् विप्रान् अध्यतिष्ठन् विप्रशरीरसंस्थाः०...। मै—तथा यो ये पितरः विप्रान् जान् आगच्छन् पात्रीभूतान् अध्यतिष्ठन् विप्रशरीरसंस्थाः०।

4 प—भ-टि—मै—ततश्च हरी हरीन् सूर्यसम्बन्धिनोऽश्वान् विष्ठया मतीविशेषेण निश्चयेन स्थितया मत्या विन्द्रते विचारयन्ति निरूपयन्तीत्यर्थः।

5 प—०शेषविभागे।

6 मै—अमावस्याभागे च सूर्यमण्डलस्य चन्द्रमण्डलादधस्तादवस्थितेः।

7 इत्यनुसन्धेयम्।

नवशब्दादतिशायनिक इष्ठन्[1]। मतो इति "सुपां सुलुक्" (पा० ७,१,३९) इत्यादिना पूर्वसवर्णः।[2] योजेति समाधिवचनाद् युजेर्व्यत्ययेन शप्, भेर्लुक्[3], "द्व्यचोऽतस्तिङः" (पा० ६,३,१३५) इति दीर्घः। इरो इति "इयाडियाजीकाराणामुपसंख्यानम्" (वा०—पा० ७,१,३९) इति ङस ईकारः॥ ३८

## अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥३९

हे 'पितरः'! 'अत्र' पिण्डे 'मादयध्वम्', स्वार्थे णिच्, मोदध्वम्। तथा 'यथाभागं' स्वं स्वं भागं प्राप्य 'आ' समन्ततः 'वृषायध्वं' वृषा इव बलिनो भवत। वृषायध्वम् इति वृषशब्दात् आचारे क्यङन्तात् लोड्मध्यमपुरुषस्य ध्वम्॥ ३९

## अमीमदन्त पितरो यथाभागमावृषायिषत ॥ ४०

'पितरः' 'अमीमदन्त' मोदं प्राप्ताः मद्दत्तेन पिण्डेन हर्षयुक्ताः इत्यर्थः। तथा 'यथाभागम्' स्वं स्वं भागं प्राप्य 'आ' समन्ततः 'वृषायिषत'[4] वृषाः इव बलिनो भूताः[5]। पूर्वमन्त्रकृते अभ्यर्थने समप्रत्युत्तरं वाक्यार्थः॥ ४०

---

1 य-मै—विष्ठयेति [ य—वि-पूर्वात्तिष्ठतेः ] "आतश्चोपसर्गे" इति कः।

2 इतःपरं य—पुस्तके—'य इति यातेः क्विबन्तात् ङस "आतो धातोः" इकारलोपः। य इति चापरं तेनैव सूत्रेण ङसः सुः' इति। मै-पुस्तके च—'य इति ङसः सुः' इति। ततश्च उभयत्रैव य-मै-पुस्तकयोः—'विन्द्रते' इति "विद विचारणे" अत्र, "आत्मनेपदेष्वनतः" इत्यदादेशः, "बहुलं छन्दसि" इति रुट्' इत्यधिको भाष्यभागः पठ्यते, परं तत्र 'योजेति' इत्यारभ्य 'दीर्घः' इत्यन्तो व्याकरणसन्दर्भो न लक्ष्यते।

3 भ—शपश्च सिप् लुक्।　　4 मा—आवृषायिषत।

5 य—'छान्दसत्वादडागमाभावः "आत्मनेपदेष्वनतः" इत्यदादेशः।' इत्यधिकम्।

नमो वः पितरो जीवाय[1] ।

नमो वः पितरः शूषाय[2] ॥

नमो वः पितरो घोराय[3] ।

नमो वः पितरो रसाय ॥

नमो वः पितरः स्वधायै ।

नमो वः पितरो मन्यवे[3] ॥ ४१-४३ *

षड्ऋतुनमस्कारोऽयम् । पितरोऽत्र ऋतुत्वेन निर्दिश्यन्ते । 'जीवाय' यत् जगतां जीवं तस्मै वर्षाकालाय । 'शूषाय' ग्रीष्माय । 'घोराय' हेमन्ताय । 'रसाय' वसन्ताय । 'स्वधायै' शरदे । महालयप्रधानत्वाच्छरदः पितॄणां तृप्तिजनकत्वात् स्वधात्वेन वर्णनम् । 'मन्यवे' शिशिराय[4] ॥ ४१-४३

नमो वः पितरो नमो वः ॥ ४४

निगदव्याख्यातोऽयम् ॥ ४४

गृहान्नः पितरो दत्त ॥ ४५

हे 'पितरः' यूयं मया प्रार्थ्यमानान् 'गृहान्' 'नः' अस्मभ्यं 'दत्त' प्रयच्छत । अत्र च "गृहिणी गृहमुच्यते" इति गृहणीप्रार्थनं वाक्यार्थः ॥ ४५

---

1 ब्रा-भ-सा—यज्जीवं तस्मै । 2 ब्रा-भ-सा—शुष्माय नमो वः पितरस्तपसे ।

3 ब्रा-भ-सा—घोराय मन्यवे ।

* मा-भ पुस्तकयोर्जैमिनीयगृह्यसूत्र-वाजसनेयिसंहिता-ब्राह्मणसर्वस्वादिग्रन्थेषु च पाठक्रमपरिवृत्त्या किञ्चिदन्यथा पठितानामेषां मन्त्राणां गोभिल-खादिरपरिगृहीतो मन्त्रब्राह्मणीयः पाठक्रमोऽत्र स्वीकृतः । पितृदयितायां मै-य-पुस्तकयोर्वा मन्त्रा इमे न पठ्यन्त इत्येषां भाष्यभागस्य गुणविष्णुकृतत्वेऽस्ति सन्देहावकाशः ।

4 मा-भ—'मन्त्रद्वयमिदं शुद्धाशुद्धपरिज्ञानार्थं व्याख्यातम्' इत्यधिकम् ।

**सदो[1] वः पितरो देष्म ॥४६**

हे 'पितरः'। वयं 'वः' युष्मभ्यं 'सदः' स्थानं पुत्राद्युत्पादनद्वारेण 'देष्म' दद्मः। देष्म इति ददातेर्लिटो मस्, "स उत्तमस्य" (पा० ३,४, ६८) इति सकारलोपः, सिप्, व्यत्ययेनाकारस्येकारः ॥४६

**एतद्वः पितरो वासः ॥४७**

निगदोऽयम् ॥४७

**ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।**

**स्वधा स्थ तर्पयत मे पितॄन् ॥४८**

हे आपः! यूयं 'स्वधा स्थ' पितॄणाम् अन्नं भवथ। तथाच श्रुतिः—"स्वधा वै पितॄणामन्नम्" इति। ततश्च 'मे' मम 'पितॄन्' 'तर्पयत'[2]। किं कुर्वत्यः? 'ऊर्जं' परमम् अन्नरसम्, 'अमृतं' देवानाम् अन्नं, 'घृतं' सर्पिः, 'पयः' क्षीरं, 'कीलालं' पक्वम् अन्नं, 'परिस्रुतम्'[3] तच्चामृतरूपमेव,[4] 'वहन्तीः' वहन्त्यः प्रापयन्त्यः। यतः यूयं नानाविधम् अन्नं वहन्त्यः स्वधा भवथ तस्मात् मम पितॄन् तर्पयत इति प्रार्थनावाक्यार्थः। वहन्तीः इति जसि पूर्वसवर्णः ॥४८

**आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्।**

**यथेह पुरुषः स्यात् ॥४९**

हे 'पितरः'! यूयं 'गर्भम् आधत्त'। किम्भूतम्? 'कुमारम्' पुत्रम्, 'पुष्करस्रजम्' पुष्करस्य पद्मस्य माला ययोः तौ पुष्करस्रजौ अश्विनौ-

---

1 वाजसनेयिसंहिता—सती। 2 प—'तृप्तिं मयत' इत्यधिकम्।

3 प—'स्रुततराम्' इत्यधिकम्। भ—'सुधाम्' इत्यधिकम्।

4 प—'परमप्रीतिहेतुत्वेन। एतत्सर्वम्' इत्यधिकम्।

कुमारी ताविव[1] पुष्करस्रजं नीरुजं दीर्घायुषं सुरूपञ्च इत्यर्थः। 'यथा' 'इह' ऋतौ 'पुरुषः स्यात्' न दुहिता इति ॥४६

शिवा आपः सन्तु ॥५०

सौमनस्यमस्तु ॥५१

अक्षतञ्चारिष्टञ्चास्तु ॥५२

निगदा एते ॥५०—५२[2]

वाजे वाजेऽवत वाजिनो नो

धनेषु विप्रा अमृता ऋतज्ञाः।

अस्य मध्वः पिबत मादयध्वं

तृप्ता यात पथिभिर्देवयानैः ॥५३

वाजम् अन्नम्, तद् येषाम् अस्ति ते वाजिनः, तच्च आद्धदत्तं पितॄणाम् अस्ति इति हे 'वाजिनः'! पितरः! यूयम् 'अवत' रक्षत। 'नः' अस्माकं 'वाजे वाजे' कृते अकृते च अन्ने। तथा 'धनेषु' अवत। किम्भूताः यूयम्? 'विप्राः' विप्रमूर्तयः विप्रशरीरसंस्थाः, 'अमृताः' अमरधर्मिणः, 'ऋतज्ञाः' सत्यज्ञानशालिनः, रक्षित्वा 'अस्य' अन्नस्य 'मध्वः' रसस्य 'पिबत'। पीत्वा च 'मादयध्वम्'। ततः 'तृप्ताः' सन्तो 'देवयानैः' यैः देवाः गच्छन्ति तैः 'पथिभिः' मार्गैः 'यात' गच्छत। मध्वः इति मधुशब्दस्य छन्दसि पुंलिङ्गस्य छान्दसत्वात् "घेर्ङिति" (पा० ७,३,१११) इति गुणाभावे यणादेशः ॥५३[3]

---

1 प—'अश्विनीकुमारमिव। एकवचनमत्र सामान्यनिर्देशेन।' इत्यधिकम्।

2 इतःपरं भ—पुस्तके—'गोत्रं नो वर्धताम्।

दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च।

आ मा वाजस्य प्रसवो जगम्या-
देमे द्यावा पृथिवी विश्वरूपे ।
आ मा गन्तां पितरामातरा युव[1]-
मामा सोमोऽमृतत्वाय गम्यात् ॥५४

'वाजस्य' अन्नस्य 'प्रसवः' फलं आद्ये दत्तस्य अन्नस्य पुण्यरूपं 'मा' माम् 'आजगम्यात्' पुनः पुनः आगच्छतु। किञ्च 'आ इमे' द्यावा-पृथिवी 'विश्वरूपे' जगत्स्वरूपे आजगम्याताम् इति सम्बन्धः, पुनः पुनः आगच्छेताम्। तथा हे 'पितरा मातरा'! हे माता-पितरौ! 'युवम्' युवां 'मा' मां 'आगन्ताम्' आगच्छतम्, यदा यदा अहं आद्धं

---

अद्धा च नो मा व्यगमद् बहु देयञ्चनोऽस्त्विति ।
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।
अन्नं प्रवर्धतां नित्यं दाता शतं जीवतु ॥

श्रुतत्वात् पितरः सम्बोध्यन्ते। पितरः नः अस्माकं गोत्रं वर्धताम् वर्धयन्तु। तथा दातारः च नः अस्माकम् वर्धन्ताम् आभिमुख्येन वर्धयन्तु। वृधु वृद्धौ। तथा वेदः ज्ञानं तथा सन्ततिः पुत्रपौत्रादिकम्। चकारात् यशोऽत्र योज्यम्। श्रद्धा च नः अस्माकम् (अ—अभि सर्वतो-भावेन अगमत् आगच्छन्तु) मा व्यगमत्। तथा नः अस्माकं प्रति बहवः दातारः भवन्तु। अथवा बहु देयं बहुदानशक्तिः। तदेवं वाक्यार्थः—नः अस्माकम् अन्नञ्च बहु भवेत् येन अन्नेन अहं बहुदेयो भवामि। तथा अतिथीन् च लभेमहि। तथा याचका बहवः नः अस्माकं सन्तु भवन्तु मा चाहं कमपि पुरुषं याचिष्म। एवञ्च सर्वे मदपेक्षाः माऽहं कस्यापि। अन्नं प्रवर्धतां नित्यमन्नं वर्धयन्तु। अक्षयी (?) भवन्तु। तथा दाता ये ये दातारः ते शतं जीवन्तु। दाता इति जात्या-वेकवचनम्। शेषं सुगमम्। स्मृतिरियं न श्रुतिरिति बृहन्नारदीयवचनं प्रमाणमिति।' इत्यधिकम्।

1 'पितरा मातरा चा मा०' इत्याकरेषु मुद्रापितः पाठः।

